BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, NO. 1306.

## ॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE CATAPATHA BRAHMANA

OF THE WHITE YAJURVEDA,

WITH THE

COMMENTAY OF SAYANACHARYA.






EDITED BY
LATE ACHARYA SATYAVRATA SAMASRAMI'S
son and pupil
**PROF. HITAVRATA SAMAKANTHA.**
*Assistant Lecturer, Vedas, The University of Calcutta.*

VOL. IX. FASC. 1.

CALCUTTA:
PRINTED BY S. V. CHATTERJI, SATYA PRESS, 16/1, GHOSE LANE.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET,
1911.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL

NO. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM THE SOCIETY'S AGENTS,—

MR. BERNARD QUARITCH, *11, Grafton Street, New Bond Street, London, W.*,

AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

*Sanskrit Series.*

| Title | Rs. | As. |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each ... Rs. | 1 | 4 |
| Advaitachintā Kaustubhe, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| *Agni Purāṇa, Fasc 3-14 @ /10/ each ... | 7 | 8 |
| Aitareya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc 1-5, Vol. IV, Fasc. 1-8 @ /10/ ... | 14 | 6 |
| Aitareyālochanum, (the preface of the Ditto) by Ācārya S. V. Sāmasrami ... | 2 | 0 |
| *Anu Bhāshya, Fasc 2-5 @ /10/ each ... | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Acvavaidyaka, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| *Ātharvana Upanishad, Fasc. 3-5 @ /10/ each ... | 1 | 14 |
| Avadāna Kalpalatā, (*Sans. and Tibetan*) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each ... | 11 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-3 @ 1/- each * | 3 | 0 |
| Bālam Bhaṭṭi, Vol I Fasc 1-2, Vol II Fasc I @ /10/ ... | 1 | 14 |
| Baudhāyana Srauta Sutra, Fasc. 1-3, Vol II Fasc I @ /10/ each ... | 2 | 8 |
| *Bhāmati, Fasc 4-8 @ /10/- ... | 3 | 2 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-5 @ /10/- ... | 3 | 2 |
| Brahma Sutra, Fasc. 1, @ /10/- ... | 0 | 10 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Bodhicāryāvatāra of Cāntidevi, Fasc. 1-5 ... | 3 | 2 |
| Çatadusani, Fasc. 1 2 ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa Vols. I Fasc 1-7, II Fasc 1-5, III Fasc 1-7, V Fasc 1-4 | 14 | 6 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmani, (Text) Vols. II, 1-25; III. Part I, Fasc. 1-18, Part II, Fasc. 1-10 @ /10/ each; Vol. IV, Fasc. 1-6 ... | 36 | 14 |
| Çlokavārtika, (English) Fasc. 1-6 @ 1/4/- ... | 7 | 8 |
| *Çrauta Sūtra of Āpastamba, Fasc. 9-17 @ /10/ each ... | 5 | 10 |
| Ditto Āçvālāyan, Fasc 4-11 @ /10/ each ... | 5 | 0 |
| Ditto Çānkhāyan, (Text) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4, Vol IV Fasc. 1 @/10/ each ... | 10 | 0 |
| Ditto Lātyāyan Fasc. 1-9 @ /10/ each ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Dān Kriyā Kaumudi, Fasc. 1-2 ... | 1 | 4 |
| Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7 ... | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc. 1-3 ... | 1 | 14 |
| Gobhilīya Gṛhyo Sutrum, Fasc. 4-12 @ /10/ ... | 5 | 10 |
| Kāla Viveka, Fasc. 1-7 ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/- each ... | 17 | 8 |
| Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... | 3 | 2 |
| Lalita-Vistāra, (English) Fasc. 1-3 @ 1/- each ... | 3 | 0 |
| Ditto Fasc. 3-6 @ /10/ each ... | 2 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... | 6 | 14 |
| Mahā-bhāṣya-pradīpōdyōta, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-6 @ /10/ each ... | 16 | 14 |
| Manuṭīkā Sangraha, (Text) Fasc 1-3 @ /10/ each ... | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... | 9 | 0 |
| * Ditto (Text) Fasc 5-7 @ /10/ ... | 1 | 14 |
| *Mīmāṁsā Darcana, (Text) Fasc. 6-19 @ /10/ each ... | 8 | 12 |

# ॥ शतपथब्राह्मणम् ॥

॥ अथ ॥

## ॥ नवमकाण्डम् ॥

### ॥ अथ प्रथमः प्रपाठकः ॥

### ॥ प्रथमं ब्राह्मणम् ॥

॥ अपिवा प्रथमाध्याये प्रथमं ब्राह्मणम् ॥

॥ हरिः ॐ ॥

अथातः शतरुद्रियं जुहोति । अत्रैष सर्व्वोऽग्निः संस्कृतः स एषोऽत्र रुद्रो देवता तस्मिन् देवा एतदमृतꣳ रूप मुत्तम मदधुः स एषोऽत्र दीप्यमानोऽतिष्ठदन्न मिच्छमानस्तस्माद्देवा अबिभयुर्यद्वै नोऽयं न हिꣳस्यादिति * ॥ १ ॥

---

* 'हिꣳस्यादिति'—इति ग, घ ।

ते ऽब्रुवन् । अन्न मस्मै सम्भराम तेनैनꣳ शमयामेति तस्मा ऽएतदन्नꣳ समभरञ्छान्तदेवत्यं तेनैनमशमयंस्तद्यदेतं देव मेतेनाशमयंस्तस्माच्छान्तदेवत्यꣳ शान्तदेवत्यꣳ ह वै तच्छतरुद्रिय मित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तथैवास्मिन्नय मेतदमृतꣳ रूप मुत्तमं दधाति स एषो ऽत्र दीप्यमानस्तिष्ठत्यन्न मिच्छमानस्तस्मा ऽएतदन्नꣳ सम्भरति शान्तदेवत्यं तेनैनꣳ शमयति ॥ २ ॥

जर्त्तिलैर्जुहोति । जायत ऽएष एतद्यच्चीयते स एष सर्व्वस्मा ऽअन्नाय जायत ऽउभयम्वेतदन्नं यज्जर्त्तिला यच्च ग्राम्यं यच्चारण्यं यदह तिलास्तेन ग्राम्यं यदकृष्टे पच्यन्ते तेनारण्य मुभयेनैवैन मेतदन्नेन प्रीणाति ग्राम्येण चारण्येन च ॥ ३ ॥

अर्क्कपर्णेन जुहोति । अन्न मर्को ऽन्नेनैवैन मेतत् प्रीणाति ॥ ४ ॥

परिश्रित्सु जुहोति । अग्नय एते यत्परिश्रितस्तथो हास्यैता अग्निमत्येवाहुतयो हुता भवन्ति ॥ ५ ॥

यद्वेवैतच्छतरुद्रियं जुहोति । प्रजापतेर्विस्रस्ताद्देवता उदक्रामंस्तमेक एव देवो नाजहान्मन्युरेव सोऽस्मिन्नन्तर्विततोऽतिष्ठत् सोऽरोदीत्तस्य यान्यश्रूणि प्रास्कन्दंस्तान्यस्मिन् मन्यौ प्रत्यतिष्ठन्त्स एव शतशीर्षा रुद्रः समभवत् सहस्राक्षः शतेषुधिरथ या अन्या विप्रुषोऽपतंस्ता असंख्याता सहस्राणीमाँल्लोकाननुप्राविशंस्तद्यद्रुदितात्समभवंस्तस्माद्रुद्राः सोऽयꣳ शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्वा प्रतिहितायी भीषयमाणोऽतिष्ठदन्न मिच्छमानस्तस्माद्देवा अबिभयुः ॥ ६ ॥

ते प्रजापति मब्रुवन् । अस्माद्वै बिभीमो यद्वै नोऽयं न हिꣳस्यादिति सोऽब्रवीदन्न मस्मै सम्भरत तेनैनꣳ शमयतेति तस्मा एतदन्नꣳ समभरञ्छतरुद्रियं तेनैन मशमयंस्तद्यदेतꣳ शतशीर्षाणꣳ रुद्र मेतेनाशमयं स्तस्माच्छतशीर्षरुद्रशमनीयꣳ शतशीर्षरुद्रशमनीयꣳ ह वै तच्छतरुद्रिय मित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तथैवास्मा एत मेतदन्नꣳ सम्भरति शतरुद्रियं तेनैनꣳ शमयति ॥ ७ ॥

गवेधुकासक्तुभिर्जुहोति। यत्र वै सा देवता विस्रस्ताशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैन मेतद्भागेन स्वेन रसेन प्रीणाति ॥ ८ ॥

अर्कपर्णेन जुहोति। एतस्य वै देवस्याशयादर्कः समभवत्स्वेनैवैन मेतद्भागेन स्वेन रसेन प्रीणाति ॥९॥

परिश्रित्सु जुहोति। लोमानि वै परिश्रितो न वै लोमसु विषं न किञ्चन हिनस्त्युत्तरार्द्धेऽग्ने-रुदङ् तिष्ठन् जुहोत्येतस्याᳬ ह दिश्येतस्य देवस्य गृहाः स्वाया मेवैन मेतद्दिशि प्रीणाति स्वायां दिश्यव यजते ॥ १० ॥

स वै जानुदघ्ने प्रथमᳬ स्वाहाकरोति। मध-इव वै तद्यज्जानुदघ्न मध-इव तद्यदयं लोकस्तद्य ऽइमं लोकᳬ रुद्राः प्राविशंस्तां स्तत् प्रीणाति ॥ ११ ॥

अथ नाभिदघ्ने*। मध्यमिव वै तद्यन्नाभिदघ्नं मध्यमिवान्तरिक्षलोकस्तद्ये ऽन्तरिक्षलोकᳬ रुद्राः प्राविशंस्तां स्तत् प्रीणाति ॥ १२ ॥

---

* 'नाभिदघ्ने'—इति ग, घ।

अथ मुखदघ्न। ऽउपरीव वै तद्यन्मुखदघ्न मुपरीव तद्यदसौ लोकस्तद्येऽमुं लोकꣳ रुद्राः प्राविशंस्तां स्तत् प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारो ऽन्नेनैवैना-नेतत् प्रीणाति ॥ १३ ॥

नमस्ते रुद्र मन्यव ऽइति। य एवास्मिन्त्सो ऽन्तर्म्मन्युर्व्वितो ऽतिष्ठत्तस्मा ऽएतन्नमस्करोत्युतो त ऽइषवे नमो बाहुभ्या मुत ते नम इतीषुणा च ह्रि बाहुभ्यां च भीषयमाणो ऽतिष्ठत् ॥ १४ ॥

स एष क्षत्रं देवः *। यः स शतशीर्षा समभव-द्विश इम ऽइतरे ये विप्रुड्भ्यः समभवंस्तस्मा ऽए-तस्मै क्षत्रायेता विश एतं पुरस्तादुद्धार मुदहरन्त्य एष प्रथमो ऽनुवाकस्तेनैन मप्रीणांस्तथैवास्मा ऽअय मेतं पुरस्तादुद्धार मुद्धरति तेनैनं प्रीणाति तस्मादेष एकदेवत्यो भवति रौद्र एतꣳ ह्येतेन प्रीणाति ॥ ॥ १५ ॥

चतुर्द्दशैतानि यजूꣳषि भवन्ति। त्रयोदश मासाः संव्वत्सरः प्रजापतिश्चतुर्द्दशः प्रजापतिरग्नि-

* 'देवः'—इति ग, घ।

यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति नमो नम इति यज्ञो वै नमो यज्ञेनैवैन मेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽइति यथा हैनं ब्रूयाद्यज्ञस्त ऽइति तादृक्तत् * ॥ १६ ॥

अथ हन्तृभ्यो जुहोति। नमो ऽमुष्मै चेति तद्यथा वै ब्रूयादसौ† त्वं च न एष च मा हिंसिष्ट मित्येव मेतदाह नतरां हि विदित आमन्त्रितो हिनस्ति ॥ १७ ॥

नमो हिरण्यबाहवे। सेनान्ये दिशां च पतये नम इत्येष एव हिरण्यबाहुः सेनानीरेष दिशां पतिस्तद्यत् किञ्चात्रैकदेवत्य मेतमेव तेन प्रीणाति क्षत्रमेव तद्विश्यपिभागं करोति तस्माद्यद्विशस्तस्मिन् क्षत्रियो ऽपिभागोऽथ या असंख्याता सहस्राणीमाँल्लोकाननुप्राविशन्नेतास्ता देवता याभ्य एतज्जुहोति‡ ॥ ॥ १८ ॥

* 'तादृक्तत्'—इति ग, घ।

† 'ब्रूयादसौ'—इति च दृष्टं डा० वेबरमहोदयेन।

‡ '०जुहोति'—इति ग, घ।

अथ जातेभ्यो जुहोति। एतानि ह जातान्येते रुद्रा अनुप्रविविशुर्यत्र-यत्रैते तद्देवैनानेतत् प्रीणा-त्यथो ऽएवꣳ हैतानि रुद्राणां जातानि देवानां वै विधामनु मनुष्यास्तस्माद् हेमानि मनुष्याणां जातानि यथाजातमेवैनानेतत् प्रीणाति ॥ १९ ॥

तेषां वा ऽउभयतो नमस्कारा अन्ये *। अन्यतरतोनमस्कारा अन्ये ते ह ते घोरतरा अशान्ततरा य ऽउभयतोनमस्कारा उभयत एवैनानेतद्यज्ञेन नमस्कारेण शमयति ॥ २० ॥

स वा ऽअशीत्यां च स्वाहाकरोति। प्रथमे चानुवाके ऽथाशीत्या मथाशीत्यां च यानि चोर्द्ध्वानि यजूꣳष्यावतानेभ्यो ऽन्न मशीतयो ऽन्नेनैवैनानेतत् प्रीणाति ॥ २१ ॥

अथैतानि यजूꣳषि जपति। नमो वः किरिकेभ्य इत्येतद्वास्य प्रतिज्ञाततमं धाम यथा प्रियो वा पुत्रो हृदयं वा तस्माद्यत्तैतस्माद्देवाच्छङ्केत तदेता-

---

* 'अन्ये। ऽन्यतरतो'—इति घ।

भिर्व्याहृतिभिर्जुहुयादुप हैवैतस्य देवस्य प्रियं धाम गच्छति तथो हैन मेष देवो न हिनस्ति ॥ २२ ॥

नमो वः किरिकेभ्य इति। एते हीदꣳ सर्व्वं कुर्व्वन्ति देवानाꣳ हृदयेभ्य इत्यग्निर्व्वायुरादित्य एतानि ह तानि देवानाꣳ हृदयानि नमो विचिन्वत्केभ्य इत्येते हीदꣳ सर्व्वं विचिन्वन्ति नमो विक्षिणत्केभ्य इत्येते वै तं विक्षिणन्ति यं विचिक्षीषन्ति नम आनिर्हतेभ्य इत्येते ह्येभ्यो लोकेभ्यो ऽनिर्हताः ॥ २३ ॥

अथोत्तराणि जपति। द्रापे ऽन्धसस्पत ऽइ-त्येष वै द्रापिरेष वै तं द्रापयति यं दिद्रापयिषत्य-न्धसस्पत ऽइति सोमस्य पत ऽइत्येतद्दरिद्र नील-लोहितेति नामानि चास्यैतानि रूपाणि च नाम-ग्राह मेवैन मेतत् प्रीणात्यासां प्रजाना मेषां पशूनां मा भेर्म्मा रोङ्मो च नः किञ्चनाम मदिति यथैव यजुस्तथा बन्धुः ॥ २४ ॥

स एष चलं देवः* । तस्मा ऽएतस्मै चत्वार्येता

* 'देवः'—इति ग, घ ।

विषो ऽमुं पुरस्तादुद्धार मुदहरन्यो ऽसौ प्रथमो ऽनुवाको ऽथाथा ऽएत मुपरिष्टादुद्धार मुदहरंस्तेनैन मप्रीणंस्तथै-वास्मा ऽअय मेत मुपरिष्टादुद्धार मुद्धरति तेनैनं प्रीणाति तस्माद्‌प्येष एकदेवत्यो भवति रौद्र एवै-तᳫं रूपेणैतेन प्रीणाति * ॥ २५ ॥

सप्तैतानि यजूᳫंषि भवन्ति। सप्तचितिको-ऽग्निः सप्तऽर्त्तवः संव्वत्सरः संव्वत्सरो ऽग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति तान्युभयान्येकविᳫंशतिः सम्पद्यन्ते द्वादश मासाः पञ्चऽर्त्तवस्त्रय इमे लोका असावादित्य एकविᳫंश एता मभिसम्पदम् ॥ २६ ॥

अथावतानान् जुहोति। एतद्वा ऽएनान् देवा एतेनान्नेन प्रीत्वाथैषा मेतैरवतानैर्धनूᳫंष्यवातन्वंस्तथै-वैनानय मेतदेतेनान्नेन प्रीत्वाथैषा मेतैरवतानैर्धनूᳫं-ष्यवतनोति न ह्यवततेन धनुषा कं चन हिनस्ति ॥ ॥ २७ ॥

---

* 'प्रीणाति'—इति क।

तद्दै सहस्रयोजन ऽइति। एतद्ध परमं दूरं यत् सहस्रयोजनं तद्यदेव परमं दूरं तदेवैषा मेतद्धनूᳫँष्यवतनोति * ॥ २८ ॥

यद्देवाह सहस्रयोजन ऽइति। अथ मग्निः सहस्रयोजनं न ह्येतस्मादिति नेत्यन्यत् पर मस्ति तद्यदग्नौ जुहोति तदेवैषाᳫँ सहस्रयोजने धनूᳫँष्यवतनोति † ॥ २९ ॥

असंख्याता सहस्राणि। अस्मिन् महत्यर्णव ऽइति यत्र-यत्र ते तदेवैषा मेतद्धनूᳫँष्यवतनोति ‡ ॥ ॥ ३० ॥

दशैतानवतानान् जुहोति। दशाक्षरा व्विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैषा मेतद्धनूᳫँष्यवतनोति § ॥ ३१ ॥

अथ प्रत्यवरोहान् जुहोति। एतद्वा ऽएतदिमाँल्लोकानित ऊर्द्ध्वो रोहति स स पराङिव रोह इय

*, †, ‡, § 'धनूᳫँष्यवतनोति'—इति क।

मु वै प्रतिष्ठा ते देवा इमां प्रतिष्ठा मभिप्रत्यायंस्तथै-वैतद्यजमान इमां प्रतिष्ठा मभिप्रत्यैति ॥ ३२ ॥

यद्देव प्रत्यवरोहति । एतद्वाऽ एनानेतत् प्रीणा-न्नन्ववैति तत एवैतदात्मान मपोद्धरते जीवात्वै तथो हानेनात्मना सर्व्व मायुरेति ॥ ३३ ॥

यद्देव प्रत्यवरोहति । एतद्वा ऽएतदेतान् रुद्रा-नित ऊर्द्धान् प्रीणाति तान् पुनरमुतो ऽर्व्वाचः ॥३४॥

नमोऽस्तु रुद्रेभ्यो ये दिवीति । तद्ये ऽमुष्मिं-ल्लोके रुद्रास्तेभ्य एतन्नमस्करोति येषां वर्षमिषव इति वर्षꣳ ह तेषा मिषवो वर्षेण ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३५ ॥

नमोऽस्तु रुद्रेभ्यो ये ऽन्तरिक्ष ऽइति । तद्ये ऽन्त-रिक्षलोके रुद्रास्तेभ्य एतन्नमस्करोति येषां वात इषव इति वातो ह तेषा मिषवो वातेन ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३६ ॥

नमोऽस्तु रुद्रेभ्यो ये पृथिव्या मिति । तद्ये ऽस्मिंल्लोके रुद्रास्तेभ्य एतन्नमस्करोति येषा मन्न-

मिषव इत्यन्नꣳ ह तेषा मिषवो ऽन्नेन ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३७ ॥

तेभ्यो दश प्राचीः। दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा इति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशो ऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्रीणाति* ॥ ॥ ३८ ॥

यद्देवाह दश-दशेति। दश वा ऽअञ्जलेरङ्गुलयो दिशि-दिश्येवैभ्य एतदञ्जलिं करोति तस्मादु हैतद्भीतो ऽञ्जलिं करोति तेभ्यो नमो ऽअस्त्विति तेभ्य एव नमस्करोति ते नो मृडयन्त्विति त ऽएवास्मै मृडयन्ति ते यं द्विष्मो यश्च नो द्वेष्टि त मेषां जम्भे दध्म इति य मेव द्वेष्टि यश्चैनं द्वेष्टि त मेषां जम्भे दधात्यमु मेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्यात्ततो ऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयंनिर्दिष्टो ह्येव स यमेवंविद्द्वेष्टि ॥ ३९ ॥

---

* 'प्रीणाति'—इति क।

विष्कृत्वः प्रत्यवरोहति । त्रिवृदग्निर्यावानग्नि-र्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति स्वाहा-कारेणान्नं वै स्वाहाकारो ऽन्नेनैवैनमेतत् प्रीणाति त्रिरित ऊर्द्धो रोहति तत् षट् तस्योक्तो बन्धुः ॥ ४० ॥

यद्वेव त्रिष्कृत्वः प्रत्यवरोहति । त्रिर्हि कृत्व ऊर्द्धो रोहति तद्यावत् कृत्व ऊर्द्धो रोहति तावत् कृत्वः प्रत्यवरोहति ॥ ४१ ॥

अथ तदर्कपर्णं चात्वाले प्रास्यति । एतद्वा ऽएनेनैतद्रौद्रं कर्म्म करोति तदेतदशान्तं तदेतच्छिरः करोति नेदिद मशान्तं कश्चिदभितिष्ठात्तन्नो हिनस-दिति तस्माच्चात्वाले यद्वेव चात्वाले ऽग्निरेष यच्चा-त्वालस्तथो हैनदेषो ऽग्निः सन्दहत्यथातः सम्पदेव * ॥ ४२ ॥

तदाहुः । कथ मस्यैतच्छतरुद्रियᳩ संव्वत्सर मग्नि माप्नोति कथᳩ संव्वत्सरेणाग्निना सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रिय

---

* 'सम्पत्सैव'—इति ग, घ ।

मथ त्रिꣳशदथ पञ्चविꣳशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सरस्याहानि तत् संवत्सरस्याहान्याप्नोत्यथ यानि त्रिꣳशत्त्रिꣳशन् मासस्य रात्रयस्तन् मासस्य रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चविꣳशत्स त्रयोदशो मासः स आत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव पञ्चविꣳश मेतावान् वै संवत्सर एव मु हास्यैतच्छतरुद्रियꣳ संवत्सर मग्नि माप्नोत्येवꣳ संवत्सरेणाग्निना सम्पद्यत ऽएतावत्य उ वै शाण्डिले ऽग्नौ मध्यतो यजुष्मत्य इष्टका उपधीयन्त ऽग्नयो हैते पृथग् यदेता इष्टका एव मु हास्यैते ऽग्नयः पृथक् शतरुद्रियेणाभिहुता भवन्ति * ॥ ४३ ॥

तदाहुः। कथ मस्यैतच्छतरुद्रियं महदुक्थ माप्नोति कथं महतोक्थेन सम्पद्यत ऽइति यान्यमूनि पञ्चविꣳशतिर्यजूꣳष्यभितो ऽशीतीः स पञ्चविꣳश आत्मा यत्र वा ऽआत्मा तदेव शिरस्तत्

* 'भवन्ति'—इति ख ।

पञ्चपुच्छान्यथ या अशीतयः सैवाशीतीना माप्तिर-शीतिभिर्हि महदुक्थ माख्यायतेऽथ यदूर्द्ध्व मशीतिभ्यो यदेवादो महत उक्थस्योर्द्ध्व मशीतिभ्य एतदस्य तदेव मु ह्वास्यतच्छतरुद्रियं महदुक्थ माप्नोत्येवं महतोक्थेन सम्पद्यते ॥ ४४ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥



॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥

चितीनामुपधानं हि काण्डेऽष्टम उदीरितम् ।
अथास्मिन्नवमे कर्म सञ्चितस्याभिधास्यते ॥

"तत्रादौ तावच्छतरुद्रियहोमं विधत्ते *—

"अथात इति 'अथ' शब्देनात्र चित्युपधाय परिसमाप्त-मनन्तर्यद्योत्पत्तेः अत इति यतः कारणात् सञ्चितः अग्निरूप

* का० श्रौ० सू० १८. १. १. वा० सं० १६. १—१६ ।

शमयनीयः अतो हेतोः शतरुद्रिय मिति कर्मनामधेयं यथा अग्निहोत्रं जुहोतीति। 'शतरुद्रियं जुहोति' शतरुद्रायाख्यं होमं भावयेदित्यर्थः। विहितोऽयं होमो रुद्ररूपतापन्नस्याग्नेरुप शमनार्थं इत्याह। 'अत्रैष' इत्यादिना तेनैनछ् शमय- नीत्यन्तेन अत्रास्मिन्नवसरे एषः 'अग्निः' साकल्येन संस्कृतो भवति। अतश्चासौ 'रुद्रो देवताः' यतः कारणाद्देवास्तस्मि- न्नेतच्चयनलक्षणेन संस्कारेण निष्पन्न 'ममृतं' अतएवोत्तमं रूपं 'अदधुः' विस्रंसनात् प्राक् यदमृतं रूप मस्ति तस्य विस्रं- सनावसरे गतत्वादेव पुनरत्र चयनसंस्कारेणादधुः। तस्मा दोषोऽग्निः 'दीप्यमानोन्न मिच्छमानो' तिष्ठन् इच्छमान इति व्यत्ययेन शानच् × × × तथाभिधानात् रुद्राद्देवा अनेनोपायेन नोऽयं हिंस्यादिति अबिभयु रिति ॥ १ ॥

'ते' देवा 'अस्मै' रुद्राय 'अन्नं' समभराम तेनैनं शमयामेति परस्य मुक्ता तथैवाकार्षुः। 'शान्तदेवत्यं' शान्तदेवतार्थं देवताशान्त्यर्थं मित्यर्थः। अतएव शमनार्थत्वात् तदन्नं शान्तदेवत्यं तच्च देवाः परोक्षकामत्वात् 'शतरुद्रीय' मित्यर्थः। तदन्न साध्यत्वात् कर्मापि तथैव व्यपदिश्यते। तथाच पूर्वं यथैव देवा अकार्षुः तथैवासावपि यजमानः तेन सहंशमितवान् भवति ॥ २ ॥

प्रकृते होमे द्रव्यविशेषं विधाय तस्य चोभयविधानात्मकत्वात् चयनसंस्कारे जात रुद्रदेवतोचित रूपत्वेन प्रशंसति— "जर्त्तिले- र्जुहोमीत्यादिना * 'जर्त्तिला' आरण्यतिलाः 'स एष' इति उत्पद्यमानस्य सर्वस्य सर्वभोगार्थं मुत्पन्ने स एव अग्निः 'सर्वस्मा

* का० श्रौ० सू० १८. १. १।

अन्नाय जायते' सर्वान्नभोगार्थं जायत इत्यर्थः। साधारण्येन होम-साधनतया जुह्वाः प्राप्तावपवाद माह ॥ ३ ॥

"अर्कं पर्णेति। अत्र 'मर्क' इति। अर्कस्य भोग्यं प्रपञ्चान्तःपातित्त्वादन्नत्वं जुहोतीतिचोदितत्वेनाहवनीये होमे प्रसक्तावाह परिश्रित्स्विति *। परिश्रित इति चितोः परितो निक्षिप्ताः क्षुद्रपाषाणाः तेष्वयं होमः कर्त्तव्यः। तेषां चाग्नेः परितः श्रयणादग्नि तेनैता आहुतयोऽग्नि मत्येव प्रदेशे हुता भवन्ति। अत कात्यायनः-"शतरुद्रियहोम उत्तरपक्षस्या परस्याᳵ स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन्निति † ।" अर्ककाष्ठञ्च दण्ड-स्थाने करणीयम् ॥ ४, ५ ॥

अथ पुनस्तमेवहोमे शतशीर्षस्य रुद्रस्येतरेषाञ्च रुद्राणा मुत्-पत्तिप्रकारं दर्शयन् तच्छमनार्थतत्वेन प्रशंसति— "यद्वैतदित्या-दिना। 'प्रजापतेः' सकाशात् विस्रंसनावसरे सर्वासु देवतासु तिर्य्यग्गतास्वपि एक एव 'मन्यु' र्हेवस्तमपरित्यज्य तस्मिन्नेवान्तः विस्तृतो तिष्ठन् पश्चात् 'स' प्रजापति विस्रंसनात् 'अरोदीत्' रोद-नाच्च ततो 'यान्यश्रूणि प्रास्कन्दन्' अपतत् तान्यन्तर्वर्त्तमाने 'मन्यौ' प्रतिष्ठितान्यभूवन् ततः स 'मन्युः' शतशीर्षत्त्वादि गुणको रुद्रोऽभूत्। अथ ततो ये अश्रुकणा जाता स्ते अनेके भूत्वा ‡ पृथिव्यादि लोकान् 'प्राविशत्' "ततश्च ते अनेके 'रुद्राः' जाताः,

---

* 'प्रसक्तत्वादपरिश्रित्स्विति'—इति ज।

† का० श्रौ० सू० १८. १. १।

‡ 'रुद्राजनाः'—इति ज।

रोदनाच्च तेषा मुत्पत्तेः रुद्रत्वम्। 'यः' पुनः 'शतशीर्षा रुद्रः' शतशीर्षो रुद्रोऽभूत् 'प्रतिहितायी' स प्रतिहिताय अभिमुखस्थायै प्रजायै भयायै तत्रान्न मिच्छन्नतिष्ठत्॥ ६॥

तस्माद्देवा अविभीत्त्वा* प्रजापतिं दृष्ट्वा ततोऽन्नसम्भरणैः शमयतेत्युपदेशं प्राप्य तथैवान् अतिष्ठत्। एतच्चान्नं शतशीर्ष-रुद्रशमनार्थत्वाच्छतशीर्षरुद्रशमनीयं तच्च परोक्षकामत्वाद्देवाः शतरुद्रिय मिति व्याहरन्ति। अतो यथैव देवाः शतशीर्षं शतरुद्रं शमयन्तथैवाय मपि यजमान एनं शतरुद्रियहोम-लक्षणेनोपायेन शमितवान् भवति॥ ७॥

तथैव होमद्रव्यान्तरम् विधाय प्रशंसति— "गवेधुकासक्तुभि-रिति। गवेधुका आरण्या गोधुमाः तेषां पिष्टैः शतरुद्रियं जुहुयात्। 'सा' प्रजापतिरूपा 'देवता' 'यत्र' यस्मिन्† प्रदेशे 'विस्रस्ताशयत' अशयदिति शेतेर्लुङि व्यत्ययेन परस्मैपदशाब्दि-करणे च रूपं, 'ततः' प्रदेशात् गवेधुका जाताः। अतस्तैर्होम-सम्पादने स्वेचभागे तस्यैवार्थप्रदर्शनम्। "स्वेन रसनेति। स्वकीयेन रसेन येन भागेनैनं प्रीणितवान् भवति। अत्र जर्तिलैर्जुहोति गवेधुकासक्तुभिर्जुहोतीति पृथगेव विहितत्वाद्द्रव्यविकल्पः। अत-एवापस्तम्बेन सूत्रितम्,— "शतरुद्रियं जुहोति जर्तिलयवाग्वा गवीधुकयवाग्वा जर्तिलैर्गवीधुकसक्तुभिः कुसयसर्पिषाजाक्षीरेण मृगोक्षीरेणवेति‡। यत्पुनरुक्तं कात्यायनेन,— "जर्तिलमिश्रान्

---

* 'अविनीत्वा'—इति ज।

† '०देवाभयस्मिन् प्रदेशे'—इति भ।

‡ आ० श्रौ० सू० १७. ११. ३।

गवेधुकासक्तून्" * —इतीति समुच्चयेनैतच्छाखान्तरानुसारेणोक्त मित्यवगन्तव्यम् ॥ ८ ॥

अर्कपर्णेन जुहोत्यन्नकर्म इत्यनेनैवार्कपर्णहोमसाधनत्वेन विहितम्। पुनरपि प्रकारान्तरेण स्तौति— "अर्कपर्णेनेति। आशयो हृदयदेशः ॥ ९ ॥

अर्कपर्णवदेव परिश्रितोऽपि प्रकारान्तरेण स्तौति—

"परिश्रित्सु जुहोतीति। 'लोमानि' देहं 'परिश्रितः' श्रयन्ति परिश्रितोप्यग्निं परितः श्रयन्तीति लोमानि 'लोमसु' विषन्नास्ति लोमसु विष संसृष्टेष्वपि बाधाभावात्। अतश्च लोमात्मकेषु परिश्रित्सु होमाद्रुद्रोपि न किञ्चनापि वसु हिन-स्ति। "एतस्यां ह दिश्येत्यस्येत्यादिकस्याय मर्थः— एतस्य देवस्य रुद्रस्य गृहादुत्तरस्यां दिशि भवन्ति। तस्या दिश्या न हिंस्यात्मकत्वात्। अत एतदुत्तरार्द्धहोमेन स्वस्या मेव (!) दिशि एनं रुद्रं प्रीणाति स्वस्या मेव तमवयजते पृथक् करोति ॥ १० ॥

स वा अग्नीत्याच्च स्वाहा करोतीत्यादिना तिसृष्वपिप्रीतिषु स्वाहाकारः क्रियत इत्युपरिष्टादुच्यते तत्र कस्मिन् प्रदेशे स्वाहाकार इति तत्राह— "स वै जानुदघ्न इति। 'जानु-दघ्ने' जानुप्रमाण प्रदेशे सोऽध्वर्युः प्रथमं स्वाहाकरोति। तथा सति देशस्याधोदेशत्वादधस्थानां पृथिवीं प्रविष्टान् रुद्रानेतेन प्रीणाति ॥ ११ ॥

---

* का० श्रौ० सू० १८. ११।

एवं 'नाभिदघ्ने' 'मुखदघ्ने' च। स्वाहाकारणान्तरिक्षगताद्यु-लोकं गतांश्च रुद्रान् प्रीणितवान् भवति। लोकत्रयेपि पतिता अश्रु-कणा: असङ्ख्याता रुद्रा: समभवन्निति प्रागुक्तम्। अथ या अन्या * इत्यादिना स्वाहाकारस्य हविर्लक्षणान्नप्रदानसाधनत्वेनान्नत्वात्तेन होमविधानेन एतान् रुद्राननेन प्रीणितवान् भवतीत्याह—"स्वाहाकारेणेति ॥ १२, १३ ॥

अथ प्रथमानुवाक्यस्य प्रथमा मृचं व्याचष्टे— "नमस्त इति। अस्मिन् प्रजापतौ स प्रागुक्तोयमेव 'मन्युर्विततोऽतिष्टत्'। 'तस्मा' एवैतेन नमस्करोति। यद्यप्यत्र मन्युरेव शतशीर्षा रुद्रा: समभवत् इति मन्युरेव रुद्र: समभवदिति मन्यु रेव रुद्र: तथापि 'रुद्र'-शब्देनात्र तदाधारत्वेनाभेदात् प्रजापति रुच्यते। 'इषवे बाहुभ्यां नम' इति। तैरेव 'भीषयमाणो ऽतिष्ठत्' इति। तेभ्य एव नमस्कारं करोति। मन्युरेव शतशीर्षो रुद्रो भूत्वा इषुणा बाहुभ्यां सर्वेषां भय मुत्पादयामासेति तन्निबन्धन भयपरिहाराय तेभ्य: सर्वेभ्यो नमस्कार: क्रियते ॥ १४ ॥

"स एष क्ष ॐ मित्यादिकस्याय मर्थ:— प्रजापते रोदनावसरे 'स' मन्युरूपो यो देव: † शतशीर्षो रुद्रो ऽभूत् स एव देव: क्षत्रं 'विप्रुड्भ्यो' ये जाता स्त इतरे 'विश:' ततश्च एता विश: 'तस्मै क्षत्राये' य एव प्रथमोऽनुवाक एतं पुरस्तादुद्धारं भाग मकुर्वन्।

---

* 'ग्राम्या'—इति ज।

† 'मन्युरुभयोरेव:'—इति ज।

तेन च भागेनैकं रुद्रं प्रीणितवन्तः। यथा लोके प्रजा राज्ञाभागं प्रदाय प्रीणयन्ति तद्वत्।

अतो यजमानोऽपि तथैव तस्य प्रथमानुवाकलक्षणं भागं कृत्वा तेनैनं तर्पयति। प्रथमानुवाकस्य पुरस्तात् उद्धारः कृतः अत एकदेवत्यः तदेव प्रदर्शितं रौद्र इति ॥ १५ ॥

प्रथमानुवाके षोडश मन्त्राः तत्र चतुर्दश मन्त्रानवयुत्य स्तौति— "चतुर्दशैतानीति। अधिमासेन सह 'त्रयोदशमासाः संवत्सरः प्रजापतिश्चतुर्दशः' चतुर्दशसङ्ख्यापूर्वकः स पुनः प्रजापति रनन्यात्मकः। ततोऽग्निरपि चतुर्दशः तथा चाग्निर्यत्परिमाणकः अस्य च तादृशोऽपि तत्परिमाणकः तत् परिमाणेनैवान्नेनाग्न्यात्मकं रुद्रं प्रीणाति। चतुर्दशमन्त्रसाध्यहोमलक्षणेनान्नेनाग्न्यात्मकं रुद्रं कार्त्स्न्येन प्रीणातीत्यर्थः। मन्त्रे पीनः पुण्ये नमः शब्दः प्रयुज्यते स च पूजावचनत्वेन यज्ञात्मकः, ततश्च 'नमोनम इति'। अनेन यज्ञरूपेणैव नमस्कारेणैनं पूजितवान् भवतीत्याह— "नमोनम इति। नमस्यतीति नमोवरिवश्चित्रं क्वचितप्यत्र नमसः पूजाया मिति वचनात् पूजार्थे क्यच् प्रत्ययः। तस्मादुहेति यस्मान्नमः शब्दो यज्ञः तस्मान्नमस्त इत्येतदयज्ञियं न ब्रूयात्। किन्तु 'यज्ञियं' यज्ञकर्माह मेव ब्रूयात् ततश्च एनं रुद्रं 'यज्ञस्त इति' यथा ब्रूयात् नमस्त इत्यपि तद्वदेवोक्तं भवति ॥ १६ ॥

अथ हन्त्रिभ्यो होमं विधत्ते, "अथेति। "नमो हिरण्यबाहव ऽइत्यादिषु मन्त्रेषु प्रतिपाद्या देवता हन्त्रिनः तत्र द्वयोर्द्वयो र्देव-

तयोः प्रतिपादनात् 'दिशाञ्च पतये नम' इत्येतद्धिरण्यबाहवे सेनान्य ऽइत्येतयो विशेषणम्। एव मुत्तरत्रापि एकैकस्य विशेषणाण् यत् द्वयोर्देवतयो * प्रतिपादनं भवति। अमुष्मैचामुष्मैवेति 'नमो हिरण्यबाहव' इत्यादि द्वन्द्विमा निर्देशः, यथा लोके 'असौ त्वं' च एष च उभावपि नो 'मा हिंसिष्ट' मिति जनो ब्रूयात् एव मेवायुंष्मा अमुष्मा इत्यपि नाभिहितं भवति। लोके 'असौ त्वं च एष च नो मा हिंसिष्ट मित्येव' मभिधानस्य प्रयोजनं दर्शयति। 'विदितो' जातोजन 'आमन्त्रितः' सन् 'नतरां हिनस्ति'। ततश्च प्रकृतेऽपि तद्वदेवाभिधानात् रुद्रो हिनस्तीति भावः। ततो नैव द्वंद्विनो दर्शयति— "नमो हिरण्यबाहवे" इति। 'एष एव' रुद्र एव 'हिरण्यबाहुः सेनानीः' दिशाम्पतिश्च। अत उक्तो मन्त्रे 'नमो हिरण्यबाहव' इति प्रथमानुवाकः शतशीर्षरुद्रो दैवत्यः। द्वितीयाद्यनुवाका इतररुद्रदेवत्याः। तत्रापि 'यत्किञ्चात्रैकदेवत्यं' तदपि शतशीर्षरुद्रस्येत्याह। "यत्किञ्चेति। अत्रापि द्वितीयाद्यनुवाकेष्वपि यत्किञ्चैकदेवत्य मेकवचनान्तमन्त्रसाध्यहोमलक्षणमन्न मस्ति तेनापि एत मेव रुद्रं प्रीणाति। 'ते' तव 'स एष क्षत्रं देवः' † 'विश इमे ये इतर' ‡ इति उक्तत्वात्। प्रजाया मपि तं क्षत्रभाजनं करोति। तस्माल्लोकेऽपि प्रजाया यदन्न मस्ति, तत्रापि क्षत्रिय सम्बन्धो भागो विद्यते। वृक्षेभ्यो हरिकेशेभ्य इत्यादि बहुवचनान्तमन्त्रप्रतिपादिताभ्यो

* "द्वयोरेवदेवतयोः"—इति ङ्र।

†, ‡ पुरस्तादिहैव १५ काण्डी, पृ० ५, पं० ६, १०।

याभ्यो देवताभ्य एतद्धोमं करोति, ताः पृथिव्यादि लोकात् प्रविष्टा विप्रुड्भ्यो जाता अनेका रुद्र देवताः बहुवचनान्तमन्त्र-साध्यो होमोऽपि विप्रुड्नानां रुद्राणा मित्यर्थः ॥ १७, १८ ॥

इन्द्विहोमानन्तरम् 'जातेभ्यो' जुहुयादित्याह— "अथेति नमः सभाभ्यः सभापतिभ्य इत्यादि प्रतिपादितानि इन्द्विविशेष-भूतान्येवजातानि एतानि खलु जातान्येतरुद्राः प्रविविशुः। तत्र तत्रैवैनान् प्रीणाति। किञ्चैवं 'एतानि रुद्राणां जातानि' खलु देवताविधानं प्रकार मनुसृत्य मनुष्या भवन्ति। तस्मा-देतानि मनुष्याणा मपि जातानि। अतो मनुष्यजातेभ्यो एव होमे सति देवजातेभ्योऽपि स्यादिति जाते एव तान् रुद्रान् प्रीणाति ॥ १९ ॥

तेषां मन्त्राणां मध्ये केचन उभयतो नमस्काराः, केचनान्य-तरतो नमस्कारा इति। तद्वैषम्ये कारण माह— "तेषां वा इति। अन्यत्र सर्वत्र होमे प्रतिमन्त्रद्रव्यप्रक्षेपे स्वाहाकार इत्यत्रापि तथैव प्राप्तावाह ॥ २० ॥

"स वा इति। स तत्र मध्वर्युं मन्त्राणा 'मशीत्यां' सकृत् 'स्वाहा करोति'। 'प्रथमेऽनुवाके च' सकृत् स्वाहा करोति। अथ पुनरशीत्यां तथैवोत्तरत्राशीत्याश्च तत्र प्रथमानुवाके षोड़श-मन्त्राः। तेषां सर्वेषा मन्ते सकृत् स्वाहाकारः। अथ 'नमो हिरण्यबाहव' इत्यारभ्य 'अर्भकेभ्यो नम'* इत्यन्त मेका अशीतिः सम्पद्यते। एकैकस्यां कण्डिकाया मष्टावष्टौ मन्त्राः। 'दिशां च

* वा० सं० १६. १७—२६।

पतये नमः' इत्यादिकं विशेषणतया सम्बन्धनीय मिति प्रागेवोक्तम् *। तथा च दशसु कण्डिकासु मन्त्राणा मशीतिः सम्पद्यते 'नम स्तक्षभ्य' इत्यारभ्य 'सुधन्वने'† चेत्यन्तं एका अशीतिः सम्पद्यते। पुन 'र्नमः स्रुत्याच' इत्यारभ्य 'धनुष्कृद्भ्यश्च वो नम'‡ इत्येत मेका अशीतिः सम्पद्यते। एतस्या अशीत्या ऊर्द्ध्वा अवदानमन्त्रेभ्यः पूर्वाणि च यजूंषि सन्ति। एतद्वोत्तरत्र विनियोगाय प्रतिनिर्द्दिष्टुं निर्द्दिष्टं 'अत्राशीत्या च स्वाहा करोति', यानि 'चोर्द्ध्वानि' चेति यदुभयं निर्द्दिष्टं तत्राशीतिः प्रशंसति— "अन्न मशीतय इति अशीति-शब्दे: अशिधातुः स्मरणादस्मत्यर्थतमास्तीतिषु स्वाहाकारे अनेनैनान् रुद्रान् प्रीणाति ॥ २१ ॥

अथ यानि चेति निर्द्दिष्टानां विनियोग माह— "अथैतानीति। "एतद्वास्येत्यादिकस्याय मर्थः— 'यथा प्रियः पुत्रो वा हृदयं वा' 'प्रतिज्ञातमं' अभिमतं 'धाम' स्थानं तद्वदेतत् मन्त्रचतुष्टय मपि 'प्रियं धाम तस्माद्यत्रैतस्माद्देयाच्छङ्केत' शङ्कितो भवति तत्रैताभि र्व्याहृतिभि र्जुहुयात्। तथा चैतस्य रुद्रस्य प्रियं धामेव प्राप्नोतीति स देव पश्चादेनं न हिनस्तीति ॥ २२ ॥

मन्त्रान् क्रमेण व्याचष्टे,— "नमो वः किरिकेभ्य इति § एते हि रुद्रा इदं सर्व मपि जगत् कुर्व्वन्ति। एतेषां प्रजापत्यशुकण-

---

* इहैव पुरस्तात् १८ काण्डी, पृ० ६, पं० १०।

† वा० सं० १६. २७—३६।

‡ वा० सं० १६. ३७—४६ क।

§ वा० सं० १६. ४६ ख।

निष्पन्नत्त्वेन प्रजापत्यात्मकत्त्वात्। अत एते 'किरिकाः' कर्त्तारः मतस्ताहृशेभ्यो वो नमोस्त्विति मन्त्रार्थः। "अग्निर्वायु रिति। 'अग्निर्वायुरादित्य' इत्येतानि 'देवानां हृदयानि' यथा हृदयं प्रधानं तद्वदेतेऽपि प्रधानानीत्यर्थः। अतस्तदात्मकेभ्यो रुद्रेभ्यो नम इत्यर्थः। अत्राग्निर्वायुरादित्यप्रकाशमन्त्रसाहित्येनैतेषां मन्त्राणां व्याहृतिशब्देनाभिधानं; किञ्चाग्निवायुसूर्यादेवानां हृदयानीति तत् प्रकाशकाना मपि मन्त्राणां हृदयत्त्वं तस्मा-त्तदभिप्रायेण 'एतद्वास्य प्रतिष्ठातमं धाम वा' यथा प्रियो वा पुत्रो हृदयं इत्युक्तं * विचिन्वन्त एव विचिन्वत्काः; एते हि रुद्रा इदं सर्वं विचिन्वंत्यभ्यवहारार्थम्। अतस्तत् परिहाराय तेभ्यो नम इत्याह। विक्षिणवन्त एव विक्षिणत्काः एते रुद्रा यं विक्षीणं कर्त्तु मिच्छन्ति तं विक्षिणवन्ति। अतश्च तेभ्यो नम इत्याहाजिजय इत्यस्य व्यत्ययेन आप्रत्यये रूपम्। "एतेह्येति। 'एते' हि रुद्रा 'एभ्यः' पृथिव्यादिलोकेभ्यो 'निर्हृता' निर्गताः। तत्र विशीर्णेभ्योऽशुकणेभ्य अत 'आनिर्हतेभ्यो' रुद्रेभ्यो नम इत्याह ॥ २३ ॥

व्याहृतिजपानन्तर एव मुत्तराणि यजूंषि जपेदित्याह "अथेति। तत्र प्रथमं मन्त्रं व्याचष्टे—"एष वा इति। 'यं' जनं 'दिद्रापयिषति कुत्सितं कर्त्तु मिच्छति। तं तथा करोति †। अतएव 'एष' रुद्रो 'द्रापे ऽन्धः' शब्देन सोमलक्षण मन्नं विवक्षित मित्याह,

---

* पुरस्तात् इहैव २२ कण्डी, पृ० ७, पं० १५।

† 'तं तथैव करोति'—इति भ।

—"सोमस्येति । 'दरिद्रनीललोहितेति' एतान्येतस्य रुद्रस्य 'नामानि च रूपाणि' च भवन्तीति । तस्य नाम गृह्णीत्वैवेनं रुद्रं प्रीणितवान् भवतीत्याह 'दरिद्रेति'। 'आसां प्रजाना मेषां पशुना' मित्येष भागस्तु स्पष्टार्थ इत्याह । "यथैवेति । असङ्ख्यातरुद्ररूपविशं शतशीर्षरुद्ररूपाय स्वताय प्रथमानुवाक्यम् । पुरस्तादुद्धारमुदहरन् 'अथ द्रापे ऽन्धस सस्पत' * इत्येव मनुवाक मुपरिष्टादुद्धार मुद्धृत्य त मप्रीणत् । तथैव यजमानोप्येतदनुवाकजपेन कृतवान् भवतीत्याह ॥ २४ ॥

"स एष इत्यादिना । यतोऽस्य रुद्रस्यैकोऽनुवाक उद्धारः कृतः तस्मात् स रुद्रैकदेवत्य इत्याह— "तस्मादिति । एतस्मिन्ननुवाके यजुर्गता सप्तत्वसङ्ख्याकात्स्न्येन तृप्तिहेतु भवतीत्याह ॥ २५ ॥

"सप्तैतानीति । 'सप्तचितिकोऽग्निः' इत्यनेनैकेन प्रकारेणाग्नेः सप्तत्वसङ्ख्या सम्बन्ध उक्तः । 'सप्तऽर्त्तवः संवत्सरः संवत्सरोऽग्निः' इत्यनेन प्रकारेण सप्तत्वसङ्ख्यायोगित्वं प्रदर्श्यते । अधिमासापेक्षया संवत्सरे सप्तऽर्त्तवो भवन्ति । प्रथमानुवाके एतस्मिन्नुवाके च मिलिताया यजुःसङ्ख्यास्त्वित्यपीदानीं प्रशंसति ;— "तान्युभयानीति । चतुर्दशैतानि यजूंषि भवन्तीति । तत्रोक्तत्वात्तानि चतुर्दश अन्त्यानि सप्त च मिलित्वा उभयान्यपि एकविंशतिः सम्पद्यते । सा चैकविंशति सङ्ख्या 'द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश' इति ।

---

* वा० सं० १६. ४७।

येषा सङ्ख्यासम्पत्तिस्ता मभिलक्ष्य भवति, तथाविधा सङ्ख्या-सम्पत्तिरत्र सम्पादिता भवतीत्यर्थः ॥ २६ ॥

अथावतानाख्यान् होमान् कुर्यादित्याह *,— "अथेति। सहस्राणि सहस्रश इत्यादि मन्त्रसाध्या होमा अवतानाः; तेषान्यवतान्यन्ते अवरोह्यन्ते धनूंष्येभिरित्युपविंश इति तत् सञ्ज्ञा। तेषा मुक्त होमे वार्थं प्रयोजनतया दर्शयति— "एतद्वा धनूंष्यवातन्वन्ति आरोपितानि धनूंष्यवरोपितवन्त इत्यर्थः। न ह्यवततेत्यनेनावरोपणस्य प्रयोजनं दर्शितम् ॥ २७ ॥

मन्त्रेषु सहस्रयोजनस्यादग्निहोमेन पदप्रयोगात् परमे दूरे † धनुषा मवरोपणं कृतं भवतीत्याह— तद्वा इति। "अथाग्नेः सह प्रयोजनत्वादग्नि होमेन ‡ सहस्रयोजन एव धनुषा मव-रोपणं सम्पादितवान् भवतीत्याह ॥ २८ ॥

"यद्देवेति। अय मग्निः सहस्रयोजन इत्येतद्देवोपपाद्यते। न ह्येतस्मिन् एतद्व्यतिरिक्त मन्यत् किञ्चिदपि च पुपरसाधकं नास्ति (?)। तस्याग्नेः प्राद्यत्यात्मकत्वेन सर्वाधिकत्वात्। अत-श्चाग्ने सहस्रयोजनत्वेन तत्र होमे सहस्रयोजन एव धनुषा मव-रोपणं सम्पादितवान् भवति ॥ २९ ॥

मन्त्र 'असंख्याता सहस्राणि। अस्मिन् महत्यर्णव

---

* "अथावतानाख्यान् होमा अवतानाः। नेयान्यवतन्यन्ते अनु-कुर्यादित्याह"—इति भ, ञ।

† 'परमे धुर धनुषा मवरोपणं कृतं भवतीत्याह'—इति भ, ञ।

‡ 'सहस्राच्यौ होमेन'—इति ञ।

इत्येतत् पदप्रयोगस्याभिप्राय माह— "असङ्ख्याता इति । 'यत्र यत्र' स्थाने एते भवन्ति तत्र तत्रैव तेषा मेतेन धनुषावरोपयति । 'अर्णव:' शब्देन पृथिव्यादयो लोका विवक्ष्यन्ते । तस्य च महतीत्यनेन कार्त्स्न्यं विवक्ष्यते । एवं च पृथिव्यादिलोकेषु सर्वत्र 'असङ्ख्याता सहस्राणि' अपरिमित सहस्रसङ्ख्याका एते रुद्रा अवतिष्ठन्ते । तेषां सर्वेषा मेव धनुषा मवरोपणं सिध्यतीति ॥ ३० ॥

उक्तां विहिताना मवतानानां होमानां सङ्ख्याविशेषं विधाय प्रशंसति— "दशैतानवतानान् जुहोतीति । 'विराडग्निरिति षष्टिश्च त्रीणि च शतानि यजुष्मत्य इष्टका उपधीयन्ते । ताश्च षड्विंशद्दशकानि भवन्ति । अतश्चैवं दशसङ्ख्यायोगादग्ने र्विराड् ऊर्द्ध्वाधो दिग्भ्यां सह * दिशां दशत्वम् । अग्नेस्तु दिगात्मकत्वं सर्वदिग् व्यापकत्वात् मुखे सप्त प्राणा:, अधो पायूपस्थौ द्वौ नाभि र्दशम इति 'दश प्राणा:' । प्राणानाञ्च सूत्रात्मकत्वादग्नि: प्राणात्मक: एवञ्च सत्यवतानां दशत्वेनाग्न्यात्मकानां रुद्राणां यावत्परिमाणं तावतैवेमानि धनूंष्यवरोपयति । साकल्येन सर्वेषां चतुरवरोपणं कृतं भवतीति भाव: ॥ ३१ ॥

अवतानहोमानन्तरं प्रत्यवरोहान् जुहुयात् इत्याह— "अथेति 'नमोऽस्तु रुद्रेभ्य' † इत्यादि मन्त्रसाध्याहोमा: प्रत्य-

---

* "ऊर्द्ध्वाधो दिग्भि: सह"— इति भ, ञ ।

† वा० सं० १६. ६४—६ ।

वरोहाः, तान् कुर्यादित्यर्थः। तेषा मुपयोग माह,— "एतद्वा इति। एतस्मिन् काले खलु एतेन होमेन 'इमान्' पृथिव्यादीन् 'लोकानित' 'ऊर्द्धो' भूत्वा 'रोहति' 'स' यजमानः 'एतद्वा इत्यनेन बुद्धिस्थः काल परामृश्यते * एव, इति च जान्वादि-प्रमाणेषु कृतो होमः अतश्च 'स रोहः पराङिव' भवति। तदा-रोहणमाना पृथक्तया तथैवोर्द्ध मेव भवतीत्यर्थः। अतश्च 'देवाः' अस्या पृथिव्याः प्रतिष्ठात्मकत्वात् 'इमां प्रतिष्ठाः' प्रत्यागतवन्तः। अथो यथैव देवाः प्रत्यागतवन्तः तथैवायं यजमानोप्येतेन प्रत्य-वरोहहोमेनेत्यां प्रतिष्ठात्मिकां पृथिवीं प्रत्येति, प्रकारान्तरेण प्रत्यवरोहान् प्रशंसति॥ ३२॥

"यद्वेवेति। एतस्मिन् खलु काले एतेन जान्वादिषु प्रमा-णेषु कृतेन होमेन 'एतत्' रुद्रान् 'प्रीणन्' अनुगच्छति यज-मानः। अथस्वेतेन प्रत्यवरोहणेन त एव रुद्रेभ्य 'आत्मनं' जीवनाये पृथक् करोति। तथा सत्यनेनेदानीं क्रियमाणेन 'एवात्मना' शरीरेण 'सर्व मायुरेति'॥ ३३॥

अथ पुनरपि केनचित्प्रकारेण तानेव स्तौति— "यद्वेवेति। पूर्वं जान्वादिप्रमाणेषु कृतेन होमेन 'इत ऊर्द्धान् रुद्रान् प्रीणाति'। पूर्वं पृथिव्यादि लोकत्रयानुप्रविष्टान् रुद्रान् पृथिवी मारभ्य द्युलोकपर्यन्तं प्रीणाति। इदानीं द्युलोक मारभ्य पृथिवीपर्यन्तं प्रीणातीत्यर्थः। अतएव सूत्रे प्रतिलोमं "प्रत्य-

* 'बुद्धिस्थः कालः स्पृश्येते'—इति ज।

वरोहान् जुहोति" * इत्युक्तम्। प्रतिलोम्यश्च प्रथमं मुखप्रमाणे पश्चाज्जानुप्रमाणे † होमः ॥ २४ ॥

अथ प्रत्यवरोहान् प्रदर्शन् व्याचष्टे— "नमोऽस्त्वित्यादिना। 'नमोऽस्तु रुद्रेभ्यो ये दिवीति', ‡ अनेन द्युलोकस्थेभ्यो रुद्रेभ्यो नमस्कारः कृतो भवति। तत्रत्याश्च रुद्रायं हिंसितुं तं 'वर्षेण हिंसन्ति'। अतश्च 'तेषां वो वयं खलु अत उक्तं मन्त्रे,— 'येषां वर्षमिषव इति'। तेभ्यो दश प्राचीरित्यादिक् स्तु मन्त्रभागस्त्रयाणा मपि समा इत्युत्तरत्र सकृदेव व्याख्यास्यत इति ॥ २५ ॥

द्वितीयं मन्त्रं व्याचष्टे— "नमोऽस्तु रुद्रेभ्यो ये ऽन्तरिक्ष ऽइति §। स्पष्टार्थ इति ॥ २६ ॥

अन्यत् मन्त्रत्रय साधारणम् ‖ ॥ २७ ॥

"तेभ्यो दशेत्यादिके मन्त्रशेषे पौनः पुन्येन 'दश'-शब्द प्रयोगस्याभिमाह— "दशदशेति। 'दशाक्षरा विराडि'-कस्तु प्रागेव व्याख्यातम् ¶ पूर्वदश प्राचीर्दश दक्षिणेत्यादौ सङ्ख्येयम् दिग्विशेषं च पर्यालोच्य सङ्ख्या मात्र मुपजीव्य प्रशंसति ॥ २८ ॥

---

* का० श्रौ० सू० १८. १. ५।

† 'प्रतिलोम्यश्च प्रथमं मुखमात्रे ततो नाभिमात्रे पुनर्जानुमात्र ऽइति।' का० श्रौ० सू० १८. १. ६।

‡ वा० सं० १६. ६४।　§ वा० सं० १६. ६५।

‖ वा० सं० १६. ५६।

¶ "दशाक्षरा वै विराट्"—इति पुरस्तात् १ का० १ अ० १ ब्रा० २२ कण्डी द्रष्टव्यम्।

"इदानीं तत् सर्व मुपजीव्य प्रशंसति— "यद्देवाहेति। पुटीकृतं करद्वय मञ्जलिरित्युच्यते। तस्य 'वा ऽञ्जलेरङ्गुलयो दश' भवन्ति। प्रत्येकं हस्तयोः पञ्चाङ्गुलीनां भावात्। तथा च सति प्राचीरित्यादिना मन्त्रभागेन तेभ्यो 'अञ्जलिं' करोति *। होमावसरे तेभ्यो दश प्राचीरित्यादिना मन्त्र-भागेन तेभ्यो रुद्रेभ्यः प्राणादि मुखादयः दशाङ्गुलयः कृत इत्यस्यार्थस्य प्रतिपादनात् प्रतिदिश्येवैभ्यो रुद्रेभ्यो अञ्जलिं करोति। होमावसरे तेभ्यो दशप्राचीरित्यादि मन्त्रभागकथ-नेनैव तत्र तत्र दिशि वर्त्तमानेभ्यो रुद्रेभ्यो ऽञ्जलिं कृतवान् भवतीत्यर्थः। "तस्माद् हैतद् इत्यञ्जलिकरणस्य कारणम् प्रदर्श्यते। 'तस्माद्भीतः सन्नेतेनाञ्जलिं करोतीति अथवा एवं व्याख्यातम्। यतोऽसौ यजमानाध्वर्युः मुखेन रुद्रेभ्यो भीतः सन् उक्तवान्। तस्मादेतस्मिन् लोकेऽपि जनः भीतो ऽञ्जलिं करोतीति। "तेभ्यो नमो ऽस्त्वित्याद्यवशिष्टमात्रभागप्रयोगस्यो-पयोग माह,— "तेभ्यो नम इत्यादिना। 'त एवेति'; त एव रुद्रा 'अस्मै' यजमानाय 'मृडयन्ति' सुखयन्ति। असौ यज-मानोऽयमेव पुरुषं 'द्वेष्टि', यो वैनं यजमानं द्वेष्टि 'त मेषां' रुद्राणां 'जम्भे' मुखे निदधातीत्यर्थः। त मेषां जम्भे दध्म इत्यत्र तमित्यस्य स्थाने अमु मिति प्रयुञ्ज्यादिति कस्यचिन्मतं पूर्वपक्षयितु माह— "अमु मेषा मिति। यं पुरुषं द्विषन्ति तम्। 'अमु मेषां जम्भे दध्मः' इति ब्रूयात्। अमु मिति तन्नामनिर्द्देशः।

* "पूजाकर्मणः प्रगृह्य पाणी देवान् पूजयन्ति"—निरु० २. ७. ४।

ततश्च तस्मिन् द्विष्यमाणेषु पुनर्नकिञ्चिदप्यस्ति म्रियतेत्यर्थः। उत्पन्यस्तं मतं निराचष्टे ; अपोति तदुक्तं मतं नाद्रियेतेत्यपि कथं तस्य वध्यस्य निर्द्देशः सेत्स्यतीति तत्राह स्वय मिति यं पुरुषं एवं यं द्विष्म इति विद्वेष्टि स स्वय मेव निर्द्दिष्टो भवति। नामधेयग्रहणं तन्निर्द्देशसिध्यर्थं भवति स च निर्द्देशो यं द्विष्मो यश्च नो द्वेष्टि त मेषा मित्यभिधानादेव सिद्ध इति तथा न कुर्यादित्यर्थः ॥ ३९ ॥

अथ प्रत्यवरोहान् जुहोतीति सामान्येन विधानात् सङ्ख्याविशेषे पर्यवसान मभिधत्ते। "त्रिष्कृत्व इति। सा त्रित्व सङ्ख्या रुद्राणां साकल्येन तृप्तिहेतु र्भवतीत्याह,— "त्रिवृदिति। अग्नेषु त्रिवृदिति अग्नेस्तु 'त्रिवृत्' प्रकारः, षष्ठकाण्डे ऽभिहितः *। 'अग्निर्यावान् अस्य च मात्रा' यावती 'तावतैवैना नेतदन्नेनग्न्यात्मकान् रुद्रान् प्रीणितवान् भवति। मन्त्रान्ते स्वाहाकारान्तप्रदानसाधनत्वादन्नरूपेण प्रशंसति, स्वाहाकारेणेति। अरोहणां प्रत्यवरोहणाञ्च मिलिता सङ्ख्यां प्रशंसति। त्रिरित इति जान्वादि मुखान्तेषु त्रिषु प्रमाणेषु होमकरणादित ऊर्द्धं त्रिःकृत्वो रोहत्विति पुनश्च त्रिःकृत्वः प्रत्यवरोहति तथा सति षट्सङ्ख्या सम्पद्यते। तस्याश्च ब्राह्मणम् 'षड्वा ऋतवः' इत्यादिना प्रागेवोक्त † मित्यर्थः ॥ ४० ॥

प्रकारान्तरेणापि त्रित्व सङ्ख्या मुपपादयति— "यद्वेवेति।

---

* इहैव ६ का० ३ अ० १ ब्रा० २५ कण्डी।

† इहैव पुरस्तात् ४ का० ५ अ० ५ ब्रा० १२ कण्डी।

'चिःक्रम्य' उद्धे मारीच्यणक्रतामतदनुसारेण त्रिःक्रम्या एव प्रत्यवरोहणं क्रतं भवति। उपपन्नं चैतत्, नोचेद्य्वनालिरिकापासः, अस्त्वेवं, किं नत इति चेत्, नैमग्न्यूनम्त्वेवापर्याप्तत्वान्नलिरेकेचाभिक्रयाद्यथा पूर्वं मवस्थानं न सुलभ मिति। आरोह सङ्ख्यानुसारेणैव प्रत्यवरोहेत् सुलभ मितिश्चैव सङ्कोचितेत्यर्थः ॥ ४१ ॥

उक्त होमानन्तरं तद्धोमिसाधन 'मर्कपर्णं चात्वाले' प्रक्षिपेदित्याह,— "अथेति । चात्वालप्रक्षेपस्य कारण माह— "एतद्धा इति । एतस्मिन् काले खलु 'एतेनार्कपर्णेनैतद्रौद्रं कर्म करोति'। अतश्च 'एतद्' पर्णं 'मशान्तं' भवति। तदिद मशान्तं पर्णं कश्चिदपि नाभितिष्ठेत्। तस्य न किमपि हिनस्त्विति। तदेतत् पर्णं ततः करोति व्यवहितं करोति। चात्वालस्य गर्त्तत्वादित्यर्थः। अथ पुनरपि तत्रैव प्रक्षेप मुपपादयति । "यद्वेति । चात्वालाग्न्याधिष्ण्यत्वेनाग्नि तत्र प्रक्षिप्तं तदर्कपर्णं 'एष' चात्वालरूपोऽग्निः 'सन्दहति' सम्यग् दहति ॥ ४२ ॥

इत्थं शतरुद्रिय होम मभिधायेदानीं तस्य सम्पत्त्यभिधानं प्रतिजानीते। [अथातः सम्पदेवेम सम्पत् सम्पत्तिः केनचित् प्रकारेण साहश्य सम्पादनम् ] *। यतः कारणात् कर्मानुष्ठानावसरे सम्पत्तिरनुसन्धातव्या। अतः कारणात् तां सम्पदेवाभिधास्यत इत्यर्थः। एवकारेणात्र होमकरणप्रकारस्य कार्त्स्न्येन विधानं सूच्यते सम्पदेव प्रदर्श्यते, न पुनर्होमकरण प्रकारः। तस्य

---

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो ञ-पुस्तकमात्रे अधिकः।

सर्वस्याभिहितत्वादिति । ता मेव सम्पत्तिः प्रश्नोत्तराभ्यां दर्शयति— "तदाहु इत्यादिना । तत् तत्र शतरुद्रियविषये 'अस्य' यजमानस्य एतच्छतरुद्रियं कथं संवत्सरात्मक मग्निं प्राप्नोति'। 'कथं' च तेन 'सम्पद्यते' सदृशो भवतीत्याहु र्याज्ञिकाः। एतस्योत्तरं 'षष्टिश्च ह वा' इत्यादि। एतच्छतरुद्रियं षष्ट्युत्तराणि त्रीणि शतानि यजूंषि। पञ्चात्त्रिंशत् ततः पञ्चत्रिंशदिति। तत्र यानि षष्ट्युत्तराणि त्रीणि च शतानि संवत्सरस्याहान्यपि तावन्ति सम्भवन्ति। ततस्तैः संवत्सरस्याहानि प्राप्नोति। 'अथ यानि त्रिंशत्' यजूंषि मासरात्रीणा मपि त्रिंशत्त्वात् रात्रीः प्राप्नोति। एवं सति समस्तस्य सर्वस्य संवत्सरवद्भावात् तत्संवत्सरात्मकत्वात् उभयात् संवत्सरस्याण्याहोरात्राण्याप्नोति। अथावशिष्टानि यानि पञ्चविंशद्विद्यन्ते तानि त्रयोदशो मासः स चाधिको मासः संवत्सरस्यात्मा मध्योभागः द्वे यजूंषी पादौ प्रतिष्ठाशब्देन पादावुच्येते पुनर्द्वे यजुषी प्राणा इन्द्रियाणि यद्यपि ते प्राणा बहव स्तथापि यानि* पञ्चविंशद्दिनाधिक† मासस्य संवत्सरान्तःपातित्व मभिदधत् तन्मासात्मकेन पञ्चत्रिंशता संवत्सरः करचरणादिविशिष्ट पुरुषकारतया प्रदर्श्यते। "एतावानिति। एतत् प्रमाणकः खलु संवत्सरः। एवं च सति संवत्सरे यावती सङ्ख्यास्ति शतरुद्रियेऽपि तावती सङ्ख्या विद्यत इति संख्याद्वारा 'शतरुद्रियं संवत्सर मग्नि माप्नोति' तेन च सदृशो भवति। "एतावत्य

---

* 'याभि' (!)—इति क, भ, म।

† 'पञ्चविंशादित्यदिनाधिक॰'—इति ज।

उभया इत्यादिकस्याय मर्थः,— 'शाण्डिले' शाण्डिलदृष्टेऽस्मिन् 'अग्नौ' (स्मिन) 'मध्यतो' मध्यप्रदेशे एतावत्यः षष्ठ्युत्तरशतत्रय-सङ्ख्याका इष्टका मन्त्रवत्य उपधीयन्ते। इयं च परिगणनो-त्तरस्मिन् काण्डे निधास्यते। इष्टकाश्चाग्न्यवयवत्वात् पृथगेवा ऽग्नयः। एवञ्च सति सङ्ख्यासामान्यात् शतरुद्रियेणेष्टकारूपा अग्नयः पृथगेवाहुता भवन्तीति॥ ४२॥

अथ प्रकारान्तरेणापि शतरुद्रियस्य सम्पत्तिः प्रश्नोत्तराभ्या माह— "तदाहु इत्यादिना। 'महदुक्थ मिति' प्रयत्नाजर्तसाह-व्यपदेशं (?) * शस्त्रान्तेनानुशंसनीयं स्तोत्रं पक्ष्याकारं भवति। तच्च पञ्चविंशस्तोम आत्माभागः अतश्चात्रापि अशीतीना मभितोविद्य-मानानि यानि (? तानि) पञ्चविंशति यजूंषि तान्येव महदुक्थे पञ्चविंश स्तोमात्मक आत्मभागः। यद्यपात्र पक्षाकारता स्तो-त्रस्यैवेति आत्मभाग इत्यपि तत्रैव तथापि तदनुशंसनात्मके शस्त्रे भेदेनोच्यते। यत्रात्मा भवति तत्रैव शिरः पक्ष पुच्छा-नीत्येतानि भवन्ति। आत्मभागादेव तेषां सर्वेषा मुत्पत्तेः आत्मभागे तानि सर्वाण्यन्तर्भूतानि। आत्मभागसम्पादना † देव शिरः प्रभृतीन्यपि संगृहीतानि भवन्तीत्यर्थः। अथातः शतरुद्रिये या अशीतयो भवन्ति ताभि र्महदुक्थस्याशीतिभि राख्याता, तत् सम्बन्धिनीना मशीतीना माप्ति र्भवति।

अथ शतरुद्रिये अशीतिभ्यो य देवोर्द्ध मन्त्र जात मस्ति

* "महाव्रते बृहस्पति सहस्र व्यपदेशं"—इति ज।

† "आत्मभागोऽयं यद्धता"—इति भ, ज।

महदुक्थस्याशीतिभ्य ऊर्द्ध्वं यो यदेव मन्त्र जातं तद्देव भवति। तेन तस्य इत्यर्थः,— यद इति महदुक्थात् परं मन्त्र जातं युष्मिस्तं परामृश्यते। एव मुक्त प्रकारेण शतर्द्धिये विद्यमानेन तेन तेन भागेन महति उक्थे विद्यमानस्य तस्य तस्य साङ्गस्याग्नेः शतर्द्धियं महदुक्थ माप्नोति तथा महतोक्थेन सम्पद्यते ॥ ४४ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥

---

॥ अथ द्वितीयं ब्राह्मणम् ॥

अथैन मतः परिषिञ्चति । एतद्वा ऽएनं देवाः शतरुद्रियेण शमयित्वाथैन मेतद्भूय एवाशमयंस्तथै-वैन मेव मेतच्छतरुद्रियेण शमयित्वाथैन मेतद्भूय एव शमयति ॥ १ ॥

अद्भिः परिषिञ्चति । शान्तिर्व्वा ऽआपः शम-यत्येवैन मेतत् सर्व्वतः परिषिञ्चति सर्व्वत एवैन मेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृदग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवैन मेतच्छमयति ॥ २ ॥

यद्वेवैन परिषिञ्चति । इमे वै लोका एषो ऽग्निरिमांस्तल्लोकानग्निः परितनोति समुद्रेण हैनां-स्तत् परितनोति सर्व्वतस्तस्मादिमांल्लोकान्सर्व्वतः समुद्रः पर्य्येति दक्षिणावृत्तस्मादिमांल्लोकान् दक्षिणा-वृत् समुद्रः पर्य्येति ॥ ३ ॥

अग्नीत्परिषिञ्चति । अग्निरेष यदाग्नीध्रो नो वा ऽआत्मात्मानꣳ हिनस्त्यहिꣳसाया ऽअश्मनो ऽध्य-

श्मनो ह्यापः प्रभवन्ति निकक्षान्निकक्षाद्ध्यापः प्रभवन्ति दक्षिणान्निकक्षाद्दक्षिणाद्धि निकक्षादापः प्रभवन्ति * ॥ ४ ॥

अश्मन्नूर्ज्जं पर्व्वते शिश्रियाणा मिति †। अश्मनि वा ऽएषोक् पर्व्वतेषु श्रिता यदापोऽग्ना ओषधीभ्यो व्वनस्पतिभ्यो ऽअधि सम्भृतं पय इत्येतस्माद्वा एतत् सर्व्वस्मादधि सम्भृतं पयस्तां न इषमूर्ज्जं धत्त मरुतः सꣳरराणा इति मरुतो वै व्वर्षस्येशते ऽश्मंस्ते क्षुदिति निदधाति तदश्मनि क्षुधं दधाति तस्मादश्मानाद्यो ऽथो स्थिरो वा ऽअश्मा स्थिरा क्षुत्स्थिर ऽएव तत् स्थिरं दधाति मयि त ऽऊर्गित्यपादत्ते तदात्मन्नूर्ज्जं धत्ते तथा द्वितीयं तथा तृतीयम् ॥ ५ ॥

निधायोदहरणं त्रिर्व्विपल्ययते। एतद्वा ऽएन मेतल्लघूयतीव यदेनꣳ समन्तं पर्य्येति तस्मा ऽएवैतन्निह्नुते ऽहिꣳसायै ॥ ६ ॥

यद्वेव व्विपल्ययते। एतद्वा ऽएन मेतदन्ववैति

---

* 'प्रभवन्ति'—इति ख। † 'मिति'—इति ख।

तत एवैतद्दात्मान मपोद्धरते जीवात्वै तथो ह्यानेनात्मना सर्व्वमायुरेति ॥ ७ ॥

त्रिर्व्विपल्ययते । त्रिर्हि कृत्वः पर्य्येति तद्यावत् कृत्वः पर्य्येति तावत् कृत्वो व्विपल्ययते * ॥ ८ ॥

अथ तमश्मान मुदहरणे ऽवधाय । एतां दिशᳪ हरन्त्येषा वै नैर्ऋती दिङ्नैर्ऋत्या मेव तद्दिशि शुचं दधाति ॥ ९ ॥

एतद्वा ऽएनं देवाः । शतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचं पाप्मान मपाघ्नंस्तथैवैन मयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचं पाप्मान मपहन्ति ॥ १० ॥

बाह्येनाग्निᳪ हरति । इमे वै लोका ऽएषो ऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्द्धा शुचं दधाति बहिर्व्वेदीयं वै वेदिरस्यै तद्बहिर्द्धा शुचं दधाति † ॥ ११ ॥

स व्वेदेर्द्दक्षिणायाᳪ श्रोणौ । प्राङ् तिष्ठन्

---

* 'व्विपल्ययते'—इति क, ख ।

† 'दधाति'—इति क ।

दक्षिणा निरस्यति यं द्विष्मस्तं ते शुगृच्छत्विति य
मेव द्वेष्टि तमस्य शुगृच्छत्यमुं ते शुगृच्छत्विति
ब्रूयाद्यं द्विष्यात्ततो ह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत
स्वयंनिर्दिष्टो ह्येव स यमेवंविद्द्वेष्टि यदि न भिद्येत
भेत्तवै ब्रूयाद्यदा ह्येव स भिद्यतेऽथ तꣳ शुगृच्छति
यं द्वेष्ट्यप्रतीच्च मायन्त्यप्रतीच्च मेव तच्छुचं पाप्मानं
जहति* ॥ १२ ॥

प्रत्येत्येष्टका धेनूः कुरुते । एतद्वा ऽएनं देवाः
शतरुद्रियेण चाग्निश्च शमयित्वा शुचमस्य पाप्मान
मपहत्य प्रत्येत्येष्टका धेनूरकुर्वत तथैवैन मय मेत-
च्छतरुद्रियेण चाग्निश्च शमयित्वा शुचमस्य पाप्मान
मपहत्य प्रत्येत्येष्टका धेनूः कुरुते ॥ १३ ॥

आसीनः कुर्वीतेत्यु हैक ऽआहुः । आसीनो
वै धेनुं दोग्धीति तिष्ठंस्त्वेव कुर्वीतेमे वै लोका
एषो ऽग्निस्तिष्ठन्तीव वा ऽइमे लोका अथो तिष्ठन्वै
वीर्य्यवत्तरः ॥ १४ ॥

---

* 'जुहोति' (!),—इति क ।

उदङ् प्राङ् तिष्ठन्। पुरस्ताद्वा ऽएषा प्रतीची यजमानं धेनुरुपतिष्ठते दक्षिणतो वै प्रतीचीं धेनुं तिष्ठन्ती मुपसीदन्ति ॥ १५ ॥

स यत्राभ्याप्नोति। तदभिमृश्यैतद्यजुर्जपतीमा मे ऽअग्न ऽइष्टका धेनवः सन्त्वित्यग्निर्हैतासां धेनुकरणस्येष्टे तस्मादेतावतीनां देवताना मग्नि मेवा मन्त्रयत ऽएका च दश चान्तश्च परार्द्धश्चेत्येष हावरार्द्धो भूमा यदेका च दश चाथ हैष परार्द्धो भूमा यदन्तश्च परार्द्धश्चावरार्द्धतश्चैवैना एतत् परार्द्धतश्च परिगृह्य देवा धेनूरकुर्व्वत तथैवैना अय मेतदवरार्द्धतश्चैव परार्द्धतश्च परिगृह्य धेनूः कुरुते तस्मादपि नाद्रियेत बह्वीः कर्त्तु ममुत्र वा ऽएष एता ब्रह्मणा यजुषा बह्वीः कुरुते ऽथ यत् सन्तनोति कामानेव तत् सन्तनोति ॥ १६ ॥

यद्वेवेष्टका धेनूः कुरुते*। वाग्वा ऽअय मग्निर्व्वाचा हि चितः स यदाहैका च दश चान्तश्च

---

* 'कुरुते'—इति ग, घ।

परार्द्धँश्चेति व्वाग्वा ऽएका व्वाग्दश व्वागन्तो वाक्-परार्द्धो व्वाच मेव तद्देवा धेनु मकुर्व्वत तथैवैतद्यज-मानो व्वाच मेव धेनुं कुरुते ऽथ यत् सन्तनोति व्वाच मेव तत् सन्तनोत्येता मे ऽग्न ऽइष्टका धेनवः सन्त्व मुत्रा मुष्मिँल्लोक ऽइत्येतद्वा ऽएना ऽअस्मिँल्लोके धेनूः कुरुते ऽथैना ऽएतद मुष्मिँल्लोके धेनूः कुरुते तथो हैन मेता ऽउभयोर्ल्लोकयोर्भुञ्जन्त्यस्मिंश्चा मुष्मिंश्च । ॥ १७ ॥

ऋतव स्थेति । ऋतवो ह्येता ऽऋतावृध ऽइति मत्यवृध ऽइत्येतदृतुष्ठा स्थ ऽऋतावृध ऽइत्यहोरात्राणि वा ऽइष्टका ऽऋतुषु वा ऽअहोरात्राणि तिष्ठन्ति घृत-श्चुतो मधुश्चुत ऽइति तदेना घृतश्चुतश्च मधुश्चुतश्च कुरुते ॥ १८ ॥

व्विराजो नामेति । एतद्वै देवा एता ऽइष्टका नामभिरुपाह्वयन्त यथा यथैना एतदाचक्षते ता एनानभ्युपावर्त्तन्ताथ लोकम्पृणा एव पराच्यस्तस्थुर्-हितनाम्न्यो निमे मिहत्यस्ता व्विराजो नामाकुर्व्वत

ता एतानभ्युपावर्त्तन्त तस्मादेता दशेष्टका ऽउपधाय लोकम्पृणयाभिमन्त्रयते तदेना व्विराजः करोति दशाक्षरा हि व्विराट् कामदुघा ऽअक्षीयमाणा ऽइति तदेनाः कामदुघा अक्षीयमाणाः करोति * ॥ १९ ॥

अथैनं व्विकर्षति। मण्डूकेनावकया व्वेतस-शाखयैतद्वा ऽएन देवाः शतरुद्रियेण चाद्भिश्च शम-यित्वा शुच मस्य पाप्मान मपहत्याथैन† मेतद्रूय एव शमयति‡ सर्व्वतो विकर्षति सर्व्वत एवैन मेतच्छ-मयति ॥ २० ॥

यद्वेवैनं व्विकर्षति। एतद्वै यत्रैतं प्राणा ऋष-योग्रे ऽग्निᳬ समस्कुर्व्वंस्त मद्भिरवोक्षंस्ता आपः सम-स्कन्दंस्ते मण्डूका अभवन् ॥ २१ ॥

ताः प्रजापति मब्रुवन्। यद्वै नः कमभूदवाक्-

---

* 'करोति'—इति ख।

† 'मपहत्याथैन'—इति ग, घ।

‡ "शमयंस्तथैवैन मय मेतच्छतरुद्रियेण चाद्भिश्च शमयित्वा शुच मस्य पाप्मान मपहत्याथैन मेतद्भूय ऽएव शमयति"—इत्यत्राधिको पाठः क, ख, ङ पुस्तकेषु।

दृगादिति सोऽब्रवीदेष व ऽएतस्य व्वनस्पतिर्व्वेत्विति व्वेत्तु संवेत्तु सोऽह वै तं व्वेतस ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा ऽअथ यदब्रुवन्नवाङ्नः काम-गादिति ता ऽअवाका ऽअभवन्नवाका ह वै ता अवका ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्ता हैता-स्वप्य ऽआपो यन् मण्डूको ऽवका व्वेतसशाखेताभि-रेवैन मेतत् त्रयीभिरद्भिः शमयति ॥ २२ ॥

यद्वेवैनं व्विकर्षति । जायत ऽएष ऽएतद्यच्चीयते स ऽएष सर्व्वस्मा ऽअन्नाय जायते सर्व्वम्वेतदन्नं यन् मण्डूको ऽवका वेतसशाखा पशवश्च ह्येता आपश्च व्वनस्पतयश्च सर्व्वेणैवैन मेतदन्नेन प्रीणाति ॥ २३ ॥

मण्डूकेन पशूनाम् *। तस्मान् मण्डूकः पशूना-मनुपजीवनीयतमो यातयामा हि सो ऽवकाभिरपां तस्मादवका अपा मनुपजीवनीयत मा यातयाम्न्यो हि ता व्वेतसेन व्वनस्पतीनां तस्माद्वेतसो व्वनस्पती-ना मनुपजीवनीयतमो यातयामा हि सः ॥ २४ ॥

---

* 'पश्पूनाम्'—इति ग, घ ।

तानि व्यᳪंशे प्रबध्य । दक्षिणार्द्धमाग्नेरन्तरेण परिश्रितः प्रागग्रे व्विकर्षति समुद्रस्य त्वावकयाग्ने परिव्ययामसि पावको ऽअस्मभ्यᳪं शिवो भवेति समुद्रियाभिस्त्वाद्भिः शमयाम इत्येतत् * ॥ २५ ॥

अथ जघनार्द्धेनोदक् । हिमस्य त्वा जरायुणाग्ने परिव्ययामसि पावको ऽअस्मभ्यᳪं शिवो भवेति यद्वै शीतस्य प्रशीतं तद्धिमस्य जरायु शीतस्य त्वा प्रशीतेन शमयाम इत्येतत् † ॥ २६ ॥

अथोत्तरार्द्धेन प्राक् ‡ । उप ज्मन्नुप वेतसे ऽवतर नदीष्वा § अग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेमन्नो यज्ञं पावकवर्णᳪं शिवं कृधीति यथैव यजुस्तथा बन्धुः ॥ २७ ॥

अथ पूर्व्वार्द्धेन दक्षिणा ‖ । अपामिदं न्ययनᳪं समुद्रस्य निवेशनम् अन्यांस्ते ऽअस्मत्तपन्तु हेतयः

---

*, † 'इत्येतत्'- इति ग, घ ।

‡ 'प्राक्'--इति ग, घ ।

§ 'नदीष्वा'—इति ग, 'नदीष्वा'—इति घ

‖ 'दक्षिणा'—इति ग, 'दक्षिणा'—इति घ

पावको ऽस्मभ्यꣳ शिवो भवेति यथैव यजुस्तथा बन्धुरित्यग्रे व्विकर्षत्यथेति यथेत्यथेति तद्दक्षिणा-वृत्तद्धि देवत्रा * ॥ २८ ॥

आत्मान मग्रे व्विकर्षति। आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा † ॥ २९ ॥

अभ्यात्मं पक्षपुच्छानि व्विकर्षति। अभ्यात्म मेव तच्छान्तिं धत्ते परस्तादर्व्वाक्परस्तादेव तद-र्व्वाचीꣳ शान्तिं धत्तेऽग्ने पावक रोचिषेति दक्षिणं पक्षꣳ स नः पावक दीदिव इति पुच्छं पावकया यश्चितयन्त्या कृपेत्युत्तरं पावकं पावक मिति यद्वै शिवꣳ शान्तं तत् पावकꣳ शमयत्येवैन मेतत् ॥ ॥ ३० ॥

सप्तभिर्व्विकर्षति। सप्तचितिकोऽग्निः सप्त-र्त्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य

* 'देवत्रा'—इति ग, घ।

† 'देवत्रा' इति ग, 'देवत्रा'—इति घ।

माता तावतैवैन मेतद्विकर्षति तं व्युष्य मुत्करे-न्यस्य * ॥ ३१ ॥

अथैन४ सामभिः परिगायति †। अत्रैष सर्व्वो-ऽग्निः संस्कृतस्तस्मिन् देवा एतदमृत४ रूप मुत्तम मदधुस्तथैवास्मिन्नय मेतदमृत४ रूप मुत्तमं दधाति सामानि भवन्ति प्राणा वै सामान्य मृतमु वै प्राणा अमृत मेवास्मिन्नेतद्रूप मुत्तमं दधाति सर्व्वतः परिगायति सर्व्वत ऽएवास्मिन्नेतदमृत४ रूप मुत्तमं दधाति ॥ ३२ ॥

यद्वेवैन४ सामभिः परिगायति। एतद्वै देवा अकामयन्तानस्थिक मिम ममृत मात्मानं कुर्व्वीमहीति ते ऽब्रुवन्नुप तज्जानीत यथेम मात्मान मनस्थिक ममृतं करवामहा ऽइति ते ऽब्रुवंश्चेतयद्ध मिति चिति मिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेम-मात्मान मनस्थिक ममृतं करवामहा ऽइति ॥ ३३ ॥

---

* 'न्यस्य'—इति क, 'न्यस्य'—इति ख, न्यस्य'—इति ग, ङ।

† 'परिगायति'—इति क।

ते चेतयमानाः। एतानि सामान्यपश्यंस्तैरेनं पर्य्यगायंस्तैरेत मात्मान मनस्थिक ममृत मकुर्व्वत तथैवैतद्यजमानो यदेनᳫं सामभिः परिगायत्येत मेवैतदात्मान मनस्थिक ममृतं कुरुते सर्व्वतः परिगायति सर्व्वत ऽएवैतदेत मात्मान मनस्थिक ममृतं कुरुते तिष्ठन् गायति तिष्ठन्तीव वा ऽइमे लोका ऽअथो तिष्ठन्वै व्वीर्य्यवत्तरो हिङ्कृत्य गायति तत्र हि सर्व्वं कृत्स्नᳫं साम भवति ॥ ३४ ॥

गायत्रं पुरस्ताद्गायति। अग्निर्व्वै गायत्र मग्नि मेवास्यैतच्छिरः करोत्यथो शिर ऽएवास्यैतदनस्थिक ममृतं करोति ॥ ३५ ॥

रथन्तरं दक्षिणे पक्षे। इयं वै रथन्तर मिय मु वा ऽएषां लोकानाᳫं रसतमो ऽस्याᳫं हीमे सर्व्वे रसा रसन्तमᳫं ह वै तद्रथन्तर मित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा इमा मेवास्यैतद्दक्षिणं पक्षं करोत्यथो दक्षिण मेवास्यैतत्पक्ष मनस्थिक ममृतं करोति ॥ ३६ ॥

बृहदुत्तरे पक्षे * । द्यौर्वै बृहद् द्यौर्हि बर्हिष्ठा दिव मेवास्यैतदुत्तरं पक्षं करोत्यथो ऽन्तरा मेवास्यै-तत् पक्ष मनस्थिक ममृतं करोति ॥ ३७ ॥

व्वामदेव्य मात्मन् । प्राणो वै व्वामदेव्यं व्वायुरु प्राणः सर्व्वेषा मु ह्येष देवाना मात्मा यद्वायुर्व्वायुमेवास्यैतदात्मानं करोत्यथो ऽप्यात्मान मेवास्यैतदनस्थिक ममृतं करोति ॥ ३८ ॥

यज्ञायज्ञियं पुच्छम् । चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः सन्तिष्ठत ऽएत मेव तस्याहु-तीनाꣳ रसोऽप्येति तदादेतं यज्ञो-यज्ञो ऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियं चन्द्रमस मेवास्यैतत् पुच्छं करोत्यथो पुच्छमेवास्यैतदनस्थिक ममृतं करोति † ॥ ३९ ॥

अथ प्रजापतेर्हृदयं गायति । असौ वा ऽआ-दित्यो हृदयꣳ श्लक्ष्ण एष श्लक्ष्णꣳ हृदयं परि-मण्डल एष परिमण्डलꣳ हृदय मात्मन् गायत्या-

---

* 'पक्षे'—इति ग, 'पक्षे'—इति घ ।

† 'करोति'—इति ख ।

त्मन् हि हृदयं निकक्षे निकक्षे हि हृदयं दक्षिणे निकक्षेऽतो हि हृदयं नेदीय आदित्य मेवास्यैतद्धृदयं करोत्यथो हृदय मेवास्यैतदनस्थिक ममृतं करोति ॥ ४० ॥

प्रजासु च प्रजापतौ च गायति। तद्यत् प्रजासु गायति तत् प्रजासु हृदयं दधात्यथ यत् प्रजापतौ गायति तदग्नौ हृदयं दधाति ॥ ४१ ॥

यद्वेव प्रजासु च प्रजापतौ च गायति। अयं वा अग्निः प्रजाश्च प्रजापतिश्च तद्यदग्नौ गायति तदेव प्रजासु च प्रजापतौ च हृदयं दधाति ॥ ४२ ॥

ता हैता अमृतेष्टकाः*। ता उत्तमा उपदधात्यमृतं तदस्य सर्व्वस्योत्तमं दधाति तस्मादस्य सर्व्वस्या मृत मुत्तमं नान्यो ऽध्वर्य्योर्गायेदिष्टका वा ऽएता व्विचितो ह स्याद्यदन्यो ऽध्वर्य्योर्गायेत् ॥ ४३ ॥ २ ॥

॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥

---

* 'अमृतेष्टकाः'—इति ग, घ।

पूर्वस्मिन् ब्राह्मणे शतरुद्रीयहोमोऽभिहितः अथास्मिन्नग्नौ परिषेकधेनुकरणाविकर्षणादिकं कर्माभिधास्यते। कात्यायनः,— "चितिं परिषिञ्चत्यग्नौ दक्षिणे निकक्षेऽद्रिं कृत्वाश्मन्नूर्जमित्यद्रेरधि" *-इति आग्नीध्रो दक्षिणकक्षप्रदेशे पाषाणं निधाय "अश्मन्नूर्ज" † मिति मन्त्रेण पाषाणस्योपरित आरभ्याग्निं परिषिञ्चेदिति सूत्रार्थः त मेकं परिषेकं विधत्ते— "अथेति। यतः कारणात् सञ्चितोग्निः रुद्ररूपत्वादशान्तः अत एनं शान्त्यर्थं परिषिञ्चेत् ननु चात्र सञ्चितस्याग्नेः रुद्ररूपत्वेनाशान्तस्य शमनार्थ मेव शतरुद्रीयहोमः। अतएवोक्तं "तस्मा ऽएत द्वनं समभरञ्च्छान्तदेवत्यं" ‡ इति अतः किमर्थं पुनः शमनार्थं परिषेकस्य विधानं? न हि शान्तः पुनरपि शान्त मपेक्षते। न हि भुक्तवान् भोजन मपेक्षत इत्यत आह— "एतद्वा इति। एतदिति देवानां कर्मानुष्ठानावसरपरामर्शः। एतस्मिन्नवसरे ते देवा अशान्त मेन मग्निं शतरुद्रियेण शमयित्वाथ तेन परिषेकेण भूय एवाधिक मेवाशमयन यतो यथैव देवा अकुर्वन् तथैवाय मपि यजमानः शतरुद्रियेण शान्त मपि पुनरधिकशमनार्थं परिषिञ्चति। अतः शमनाधिक्यार्थत्वात् परिषेकोऽवश्यं विधेय इति भावः। "अथैन मतः परिषिञ्चति"-इति सामान्य विधानात्त्रय आदिनाऽपि परिषेकः

---

* का० श्रौ० सू० १८. २. १।

† वा० सं० १७. १।

‡ द्रष्टव्य पुरस्तात् १ ब्रा०, २ क०, पृ० २, पं० २।

स्यादित्यत आह,— "अग्निरिति। परिषेकस्य शमनार्थत्वादयः श्चाग्न्यादिकृतसन्तापशमनक्षमत्वेन शान्तित्वादद्भिः सम्पादितेन परिषेकेणैनं शमयति ॥ १ ॥

"अद्भि" रपि क्वचिदेवपरिषेकेसाकल्येन शमनं न सेत्स्यतीत्याह, — "सर्वत" इति। सकृत् कृते शास्त्रार्थ इति न्यायेन सकृदपि परिषेके कृते परिषेकविधिश्च इत्यर्थः। स्यादित्यभिप्रेत्य तदावृत्ति सङ्ख्यां दर्शयति। 'त्रिः कृत्व' इति। त्रित्वसङ्ख्यस्य कार्त्स्न्येनेन शमनहेतु इत्याह,— "त्रिवृदग्नि" रिति अथ तमेव परिषेकं प्रकारान्तरेण प्रशंसति ॥ २ ॥

"यद्वेवम मिति। एष सञ्चितोऽग्निः प्राजापत्यात्मकत्वेन प्रजापतेश्च सर्वलोकहेतुत्वेन तदात्मकत्वात् 'इमे' पृथिव्यादयो-लोकाः खलु अतश्च तादृशस्याग्नेः परिषेकेण इमानेव 'लोकानद्भिः परितनोति' परिवेष्टयति। समुद्रस्यावात्मकत्वादद्भिः परिषेके समुद्रेणैवेनान् लोकान् परिवेष्ठयति। स च परिषेकः 'सर्वतः' सम्पादित इति समुद्रोपीमान् लोकान् सर्वतः (पर्येति पृथिव्याः समुद्रेण वलवत्त्वात् अन्तरिक्षद्युलोकयोः पृथिव्या सुपरिवर्त्तमानत्वात् पृथिव्यादीन् सर्वान् लोकान् सर्वः समुद्रः पर्येतीत्युच्यते सर्वतः) * परिषेकः सव्यावृदपि कर्त्तुं शक्यत इत्यत आह — "दक्षिणावृदिति। अतः प्रादाक्षिण्येक्रमेण परिषेकः सम्पादितः अतः समुद्रोऽपि तथैव पर्येति ॥ ३ ॥

---

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो ज पुस्तकमात्रे अधिकः।

समाख्याविनियोगाच्चाध्वर्योः परिषेक प्राप्तापवाद माह ,— "अग्नीदिति । अथ कस्मादध्वर्युपरित्यागेनाग्नीध्रः परिषिञ्चत इत्यत्राह * अग्निरेष इति परिषेक्तव्यस्याग्नेरग्रमनेन स्वयस्वादध्वर्यो परिषेक्तरितो † हिंसा सम्भाविता स्यात् आग्नीध्रस्य पुनरग्न्यात्मकत्वेन आत्मनैवात्मनो हिंसाया असम्भवादहिंसार्थं तस्य परिग्रह इत्यर्थः। परिषेकावसरे दक्षिणे निकक्षे कश्चित् पाषाणं निधाय तत आरभ्यत इत्याह। "अश्मनोधीत्यादिना। निकक्षः कक्ष प्रदेशः तत् सन्धिस्थानं। लोकेऽपि पर्वतादिषु दक्षिणात्पाषाणसन्धिस्थानाद् सर्वत स्तेकस्थस्थाने (?) पाषाणं निधाय तत आरभ्य परिषिञ्चेत् इत्यर्थः। ४ ॥

इत्थं प्रकारं परिषेकं विधाय अथ तत्र मन्त्रं प्रदर्शन् व्याचष्टे— "अश्मन्नूर्जं मिति ‡। आप इति यत् 'एषा' पर्वतेष्वश्मनि 'श्रिता ऊर्करसः पर्वतेषु पाषाणसन्धिभ्यो या मुत्पन्नेः अतस्त्वाश्मन्नूर्जं मित्येषभागो य एवाभिधत्ते। 'शिश्रियाणा' मिति श्रयतेः शानचि इयङादेशे च रूपम्। उत्तरत्र 'ररा॒णा' इत्येतदपि निजन्तं पदम्। "अद्भ्य ओषधीभ्य इत्येतन् मन्त्रभागपरिपाद्योर्थः प्रसिद्ध इत्याह ,— "एतस्माद्धीति। 'पयः' क्षीरं तच्च अन्नादिभ्यः सम्पाद्यन्ते इत्येतत् प्रसिद्ध मेव यवात्युक्तवतीभ्यो गोभ्यः स्तदुत्पत्तेरिति। 'तां न इषं' इत्यनेन भागो न

---

* 'इयत आह'—इति ज, भ। इत्यत्राह'—इति क, ग।

† 'स्वयदध्वर्यो (१) परिषेक्तरि नो (!)'—observed by Dr. Webber.

‡ वा० सं० १७. १।

मरुतात् , तत् तदात्मत्वस्य प्रतिपादनात् तेषां तत् प्रेरकत्वेन तदुपपादयति। "मरुतो वा इति मन्त्रस्याय मर्थः,—'पर्वते' अश्मनि 'शिश्रियाणां' श्रिता ऊर्जं रसं अत्र इत्यर्थः। ता मूर्ज मद्भाः ओषधीभ्यो वनस्पतिभ्यश्च सम्भृतं पयो व्याहरन्ति तद्रसत्वात्। हेतु मतः संरराणाः रादाने, सम्यग्दातारो यूयं ता मिष मश्यमाणा मूर्जं रसं नोऽस्मभ्यं धत्त सम्पादयतेति। परिषेकानन्तरं अश्मस्त इत्यनेन मन्त्रेण पाषाणे कुम्भं निदध्यात् इत्याह। "अश्मंस्ते क्षुदिति निदधातीति। अश्मनि कुम्भस्य निधाने परिषेकेण शान्तस्य रुद्रस्य क्षुधं पाषाणे निहितवान् भवति इत्याह। तस्मादश्मनि क्षुधं दधाति। "तस्मादिति यतोऽश्मनि क्षुन्निहिता तस्मात्राश्मो न भक्षणीयः तस्यानिमु धारत्वे नत्यस्मरत्वात् नत्वग्निं सम्भिन्या क्षुधो निधानं पाषाणयति रत्स्थानेपि कर्त्तव्यं स्यात्। अतस्तदुल्लङ्घनेनात्रैव कि मिति निहितेति तत्राह, "अथो इति 'अश्मा कठिनत्वात् 'स्थिरः क्षुदपि तथा स्थिरादिदानी मुपशान्तादि कालान्तरेऽनुवर्त्तनात्। अतोऽश्मनि क्षुधो निधानो स्थित एव स्थिरं दधाति। अश्मनिहितस्य कुम्भस्य पुन र्मन्त्रेण स्वीकारं विधत्ते— "मयि त इति। तत् तेन स्वीकारेण पुनरात्मन्यूर्जं अवाभिन्नात्मत्ते। पूर्वं क्षुधापगमनार्थं अश्मनि कुम्भो निहितः। तदात्मन्यूर्जोधारणं न सिध्योवेदिति तदर्थं पुन "स्तथा द्वितीयं तथा तृतीयं इति। तृतीय वा एव स्थाने किं कर्त्तव्य मिति ॥ ५ ॥

तत्राह,—"निधायेति। उदकं ह्रियतेऽनेनेति उदहरणं कुम्भः

"उदकस्योदः सञ्ज्ञायाम्" * इत्युदादेशः । तन्निधाय त्रिवारं विपल्ययते प्रतिपर्य्येति । सव्यावृत्त्यर्थेति विपल्ययत इति । "उपसर्गस्यायताविति लत्वं" † किमर्थं विपर्य्यण मित्याह "एतद्वा इति । एतस्मिन्नवसरे खलु एन मग्निं समन्तात्पर्य्येतीति यत एतेनेनं लघुयति लघुमिवाचरति अतस्तथा कृतेऽग्नि र्हस्या-दिति । अहिंसार्थं तस्मा एवाग्नये निह्नुते कृतं तदपराध मपमार्ष्टीत्यर्थः । लघूयतीति उपमानादाचरतीति इति क्यच् प्रत्ययः ‡ । "तस्मा इति । "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इतिना सम्प्रदान सञ्ज्ञायां चतुर्थी" § इत्यर्थः प्रकारान्तरेणापि विपर्य्ययणं प्रशंसति ॥ ६ ॥

"यद्वेवेति । प्रदक्षिणप्रकावसरे तेनाग्नि मनुगतो भवतीति विपर्य्ययणात् । तत एव जीवनायात्मानं पृथक् करोति । तथा सत्ये नेदानीं म्रियमाणेन शरीरेणैव 'सर्व मायुः' प्राप्नोति ॥ ७ ॥

विपर्य्ययणस्य त्रिवारं करणं प्रशंसति —

त्रिर्विपल्ययत इति ॥ ८ ॥

त्रिवारं पर्य्येत्य पश्चात् साश्मानं कुम्भं नैर्ऋत्यां दिशि प्रक्षिपेदित्याह ,—

"अथेति । "एतां दिशं" नैर्ऋतीं दिशं हस्तेनाभिनीय दर्श-यति । "एषा नैर्ऋती दिगिति विवरणात् ॥ ९ ॥

---

* पा० सू० ६. ३. ५७ ।

† पा० सू० ८. २. १९ ।

‡ पा० सू० ३. १. १० ।

§ पा० सू० १. ४. ३४ ।

"एतद्वा इति। पूर्वं देवा एत मग्निं 'शतरुद्रियेण चाङ्गिश शमयित्वाथा' स्यग्नेरेनोक्तप्रदेशे प्रक्षेपेण शोक रूपं पापं हृतवन्तः। अतो यजमानोऽपि तत्र प्रक्षेपेण तथैव कृतवान् भवति ॥ १० ॥

प्रक्षेपार्थं हरणत्रसर अग्नेर्दक्षिणभागेन हरेदित्याह,— "बाह्येनाग्नि मिति। तथा हरणेन शोच्यः पृथिव्यादि लोकेभ्यो बहिर्बहिःकृतो भवतीत्याह,— "इमे वा इति। अग्नेः पृथिव्यादि लोकत्रयात्मकत्वं प्राजापत्यात्मकत्त्वात् तथैव वेदेरपि बहि हरण मभिधाय प्रशंसति। "बहिर्वेदीति ॥ ११ ॥

उक्तप्रकारेण साश्मानं कुम्भकृत्वा 'वेदेर्दक्षिणस्यां श्रोणौ' प्राङ्मुखास्तिष्ठन् 'यं द्विष्म' इत्यनेन मन्त्रेण दक्षिणतो निरस्येदित्याह। "स वा इत्यादिना। उक्तं मन्त्रेण निरसने मन्त्रार्थ स्तथैव फलतीत्याह,— य मेदिति। 'अमुं ते गच्छत्वित्यादिकन्तु प्रागेव व्याख्यातम्। निरस्तस्य तस्याश्मनो भेदने कुर्यादिति तत्राह। "यदाति। भेत्तवै भेत्तुं गच्छत्यर्थेत्यादि सूत्रेण तु मर्थ तवै प्रत्ययः। निरसनेनाभिन्नस्य तस्य बालोद्भेदनेन किं लभ्यत इति तत्राह। यदा भाति अत्र 'यदि न भिद्येत भेत्तवै ब्रूयाद्' इति सामान्येन च तद्भेदनं अश्मविषयं उदकुम्भविषयं इति निर्णयो दृश्यते। अतोऽत्र विचार्यते, किं मेतद् भेदनं कुम्भविषय मश्मविषयं एवेति। किं तावत् प्राप्तं सामर्थ्यात् कुम्भविषय मेतद्भेदनं नाश्मविषयं, कुत एतत् एव मेतद्भेदपनं समर्थं भवति। यदि न भिद्येत भेत्त वै ब्रूयादिति।

अद्रीत्व समर्थं मेव न हि तस्य कठिनत्वात् भेदन माशङ्क्यते इति प्रामेऽभिधीयते *। अश्मविषय मेतद्भेदनं प्रतिपत्तव्यम् †। न कुम्भ विषयम्। कुत एतत् अर्थवादात् यदा ह्येव स भिद्यतेऽथैताए मृगच्छति। यं द्वेष्टीति ॥ १२ ॥

सा च शुगश्मनि निहिता तदश्मनि क्षुधं ‡ दधातीति। किञ्च आश्मनिवाक्यभेदनं कुम्भे भेदनए सामर्थ्यादग्निवीर्यवादाद्वाश्च-त्वाच्चेति धेनुकरणं नाम वक्ष्यमाण मन्त्रजपपूर्वकं धेनुरूपेणानु-सन्धानम् शतरुद्रियादि कुंभनिरसनान्तं कर्मकृत्वा प्रत्येत्य देवैर्धेनुकरणाद्यजमानोऽपि एतेन तथैव कृतवान् भवतीत्याह,— 'एतद्वा' इति ॥ १३ ॥

विहितं धेनुकरणं आसीनेन सम्पाद्य मिति केषाञ्चिच्छाखिनां सोपपत्तिकं मतं पूर्वपक्षयितुं दर्शयति। 'आसीन' इति स्वमत माह— "तिष्ठंस्त्वेविति। तिष्ठन्नेव कुर्वीत न पुनरासीन इत्येवकारेण पूर्वं मुपन्यस्तस्य मतस्य निरासः। स्वमते उपपत्ति माह— "इमे वा इति। एवं मध्वितोऽग्नि रिति पृथिव्यादयोलोकाः कुतः प्रजापति स्तावत् पृथिव्यादि-लोकहेतुत्वेन तदात्मक एषोऽग्निः प्राजापत्यात्मकः। स यः स प्रजापतिर्व्यस्रंसत् मेव स योऽय मग्निश्चीयत इत्युक्तत्वात्। इत्थं प्राजापत्यात्मना अग्नि रिमे लोकाः, लोकाश्चैते तिष्ठ-

---

* का० श्रौ० सू० १८. २. ७।

† वा० सं० १७. १ ख।

‡ 'शुचं'—इति का० श्रौ० सू० १८. २. ८।

श्नीव जर्ता अवतिष्ठन्त इव। अतश्च पृथिव्यादिलोकत्रया-त्मकस्याग्नेरवयवीभूतामा मिष्टकामां धेनुकरणं स्थित्वा सम्पाद्य मित्यर्थः। अपि च लोके तिष्ठन् पुरुषो वीर्यवत्तरो भवति। तस्मासीनः ततश्च वीर्यवानेव भूत्वा धेनु करोति। यथा धेनवो-ऽभिमतं पयो * दुहन्ति तद्वदेवैता अपिष्टकाः स्वाभिलाषितं दुहन्ति बुध्या धेनुरूपेणानुसन्धानं क्रियते धेनवश्च वीर्यवता-रेव जनेन दुह्यमाना भूयः पयो दुहन्ति न पुनर्दुर्बलेन। अतो-ऽत्रापि स्वाभिलषितदोहनार्थं धेनुकरणं वीर्यवता सम्पा-द्यन्तश्च वीर्यवत्तं † तिष्ठतः सम्भवतीति तिष्ठन्नेव धेनुः कुर्या-दिति भावः तिष्ठन्नपि कथं तिष्ठन् कुर्यादिति ॥ १४ ॥

तत्राह,— "उदङ् प्राङिति" ऐशानीदिगुच्यते। तदभि-मुखस्तिष्ठन्नित्यर्थः ‡। लोके हि यजमानस्य पूर्वभागे धेनोः प्रत्यङ्मुखतयावस्थानो दोग्धृणाञ्च प्रत्यङ्मुखा यासीन दक्षिणभाग उपसदनात् स्वाभिलषितदोहनार्थे इष्टकानां धेनुकरणे तथावस्थान मुचित मित्याह— "पुरस्ताद्वा इति ॥ १५ ॥

प्रकृते धेनुकरणे स्थानविशेषस्पर्शपूर्वकं मन्त्रं विधत्ते— "स यत्रेति। अग्नेरात्मभागस्योपरि यत्र स्पष्टु माप्नोति 'तत्' स्थान मभिमृश्य इमा मे धग्न इति मन्त्रं जपेदित्यर्थः। अतएव

---

* 'या'—इति क।

† 'वीर्यवत्ते'—इति ख।

‡ का० श्रौ० सू० १८. २. १०

कात्यायनः— "आत्मन उपरि प्रापय्यान्ते जयतीमाम इति * ।
अत्रात्मन इति अग्न्यात्मभागस्येत्यर्थः। अग्न्यादिव्यतिरिक्तासु
बह्वीषु देवतासु सतीष्वपि मन्त्रे अग्नि मेव प्राधान्येन कि
मिति सम्बोधयतीत्यत आह,— "अग्निर्ह्येतासा" मिति । अवयव-
व्यापारे अवयविनः सामर्थ्योपलम्भादिष्टकाना मग्न्यवयवत्वेनाग्नि-
स्तासां करणे असमर्थ इति भावः मन्त्रे आदावेकाच दशचेति ।
अवसाने अन्तश्चापरार्द्धश्चेति सङ्ख्याविशेष प्रयोगस्याभिप्राय
माह— "एका च दशचेति । य एष परार्द्धो भूमा अपकृष्टं
बहुत्वं अवरसङ्ख्यापर मसोमाशताद्यपेक्षया दशत्वसङ्ख्या अवरा
ततोऽप्यवरा एकच सङ्ख्या ततश्चार्वाचीनायाः सङ्ख्याया अभा-
वादिति। अतोऽन्तश्च परार्द्धश्चेति यत् एष परार्द्धो भूमा
उत्कृष्टं बहुत्वं अधिकसङ्ख्याकाष्टादशशतसहस्रादिसङ्ख्यापेक्षया
अन्तस्याधिकत्वं ततोऽपि परार्द्धस्याधिकत्वं तत उत्तरस्या
अधिकसङ्ख्याया अभावादित्यर्थः । एवं च देवान् पून सङ्ख्या
भूम्ना अधिक सङ्ख्या भूम्ना च मध्यतः शतादि सङ्ख्याकाः ।
एताः इष्टकाः परितो गृहीत्वा धेनुरकुर्वत । यत एव तस्मा-
दिदानीं यजमानोऽपि एकाचेत्यादिमं मन्त्रपाठेन तद्वदेव परिगृह्य
धेनुः कुरुत इति । नन्वेवं सति मन्त्रे यत् सङ्ख्याकानां मिष्टकानां
धेनुरूपता सम्पाद्यते तत् सङ्ख्याका इष्टकानां धेनवः क्रियन्ते ।
तथाप्युक्तसङ्ख्यातिक्रमेण तत्सङ्ख्यानुसारात् बह्वीः कर्तृराद्रियेे-
तेत्यर्थः । कथं तर्हीष्टकास्तत्सङ्ख्याका धेनवः सम्पाद्यन्त

* का० श्रौ० सू० ८. २. ६ ।

इत्यत आह,— "अमुत्र वा इति। एष यजमानो ऽमुष्मिन् लोके उपलक्षण मेतत् इहलोकेऽपि* ब्रह्मणा बृहता वीर्यवता † तेन यजुर्मन्त्रेणैता इष्टका बह्वी: एकादिपरार्द्धान्त सङ्ख्याका: कुरुते, मन्त्र सामर्थ्यादल्पस्य बहुवचनम् ‡ ॥ १६ ॥

तैत्तिरीयके श्रूयते §,—"धान्यमसि धिनुहि देवान्"–इत्याह। एतस्य यजुषो वीर्येण यावदेका कामयते यावदेका तावदाहुति: प्रथते न हि तदक्षिणावदेव स्यात् यावज्जुहोतीति मन्त्रे एका च दशचेत्यादिनोत्तरोत्तराधिकसङ्ख्यासन्तानस्य फल माह— "अथेति। अथ तदेवेष्टका धेनुकरणं वाग्धेनुकरणात्मना प्रशंसति— "यद्वेति। मन्त्ररूपया वाचितत्वात्। अग्नि-र्वागात्मक: एकत्वादिका अपि सङ्ख्या: वाचा प्रकाश्य-मानत्वात् वागात्मिका: एव भवति। अग्न्यवयवो भूताना मिष्टकाना एकादश चेत्यादि सङ्ख्या प्रकाशनेन मन्त्रेण देवा वाचा मेव धेनु मकुर्वन्। अत इदानीन्तनोऽपि यजमानस्तद्वदेव करोति। एकत्वादि सङ्ख्यानां वागात्मकत्वात् उत्तरोत्तराधिकसङ्ख्यासन्तानेन वाच मेव भूयसी मविच्छिन्नां सम्पादितत्त्वाद्भवतीत्याह— "अथेति। ननु च "इमा मे ‖ अग्न

---

* 'इहातोकेऽपि'—इति भ।

† 'वीर्यवतेत्यर्थ:'—इति ज, भ, ञ।

‡ 'बहुभवनम्'—इति ज भ, ञ।

§ तै० सं० १. १. ६।

‖ वा० सं० १७. २।

इष्टका धेनवः सन्त्वित्यनेनैवैव * धेनुरूपत्वं सम्पादनात्। पुन-रपि तद्देवैता मे अग्न इत्यादिना सम्पाद्यत इति। पौन-रुक्त्या शङ्का निवारयति। एतद्वा इति इमा मे अग्न इत्येतेनैवा इष्टका अस्मिंल्लोके धेनूः करोति। अथैता मे अग्न इत्यनेन अमुष्मिंल्लोके स्वर्गे धेनूः करोति। अतश्च पृथगर्थ-त्वाद पुनरुक्ति रितिभावः। इष्टकानां लोकद्वयेऽपि धेनु-रूपता सम्पादनस्य फल माह— "अथो इति। तथासति एता इष्टकारूपा धेनवः अस्मिंश्चामुष्मिंश्चेत्युभयोर्लोकयो रप्येनं यज-मानं भुञ्जन्ति पालयन्तीत्यर्थः। भुञ्जन्तीति भुजो नवमं इत्यात्मने पदं विधानो अवन निषेधात् परस्मैपदम्। हे अग्ने इमा इष्टका इहलोके एकत्वादि परार्द्धान्त सङ्ख्याविशिष्टा धेनवः केवलं हि मिहलोक एव किन्तु हे अग्ने अमुत्रेत्येतत् पदं मन्त्र एव विवृणोति। अमुष्मिंल्लोक इति तत्रापि एता इष्टका मे धेनवः सन्त्विति मन्त्रस्यार्थः॥ १७॥

अथ तत्रैव मन्त्रान्तरम् प्रदर्शयन् व्याचष्टे— "ऋतव स्थेति †। ऋतवो हीति एता इष्टका ऋतव खलु संवत्सरा-त्मकस्याग्ने अवयवत्वादित्यर्थः। अहोरात्राणि वा इष्टका इत्यत्राप्ययमेवाभिप्रायः। ऋतावृध इति छान्दसो दीर्घः; ऋता-वृध इति पुनर्वचन मादरार्थः। स्पष्ट मन्यत्॥ १८॥

---

* 'सन्ति यानेवैव' इति ङ।

† वा० सं० १७. ३।

"विराजो नामेत्यादिकस्याय मर्थः,— एतस्मिन् काले खलु 'देवाः' यथा 'यथा एता इष्टका आचक्षते' येर्नामभिरेता इष्टका आचक्षते जनाः ते देव ता मभिरेता इष्टका आचक्षते जनाः ते देव नामभिः स्वय मधाक्षयन्ताम् । ततश्चैता इष्टका एमान् देवान् 'अभ्युपावर्त्तम्' तत् समीप मगमत् । 'अथ लोकम्पृणा एव' अविक्षितनाम्नः धेनुरूपतया अक्षयें मूषं विसृजन्त्यः ; पराङ्मुखा एव तस्थुः अन्यासा मिष्टकानां स्वयमातृणा रेतः सिग्विश्वज्योतिरपस्याप्राणभृदित्यादिकानि विद्यन्ते लोकम्पृणानान्तु तथा प्रातिस्विकनामधेयाभावादिष्टकावत् स्वनामानाख्यानेन विमुखा भूत्वा अवस्थिताः * इत्यर्थः । पश्चाद्देवास्ता इष्टका विराजमाम्नो रकुर्वत † । अतः स्वय मपि तत् समीप मगमत् । अतएव तस्मादुपधानावसरेऽपि लोकम्पृणा दशदशोपधाय मन्त्रेणाभिमन्त्रयते एवं च सति विराजो दशाक्षरत्वात् देवा विराजः कृतवान् भवतीति । तस्मात् मन्त्रे लोकम्पृणा उद्दिश्य विराजो नामेति प्रयुक्त मिति ॥ १९ ॥

विशद मन्यत् ऋतवस्थेत्यादि मन्त्रस्य योजनं यथाश्रुत मेव इष्टकानां धेनुरूपता सम्पादनानन्तरम् "मण्डूकेनावकया वेतसशाखाभिरग्निस्थलस्य विकर्षणं विधत्ते— "अथेति ।

---

* 'वनस्थिरः'—इति ज ; 'वनस्थित'—इति भ ।

† 'रक्कुर्वत'—इति क ।

एतद्वा इत्यादिकस्य सम्बन्धस्तु प्रागेवाभिहितः। विहितं तद्विकर्षणं 'सर्वतः' कर्त्तव्य मित्याह ॥ २० ॥

सर्वत इति सर्वथापि विकर्षणस्य शमनार्थतां दर्शयति— "यद्वेवेन मिति। 'एन' मग्निं मण्डूकादिभि 'र्विकर्षति' इति 'यत्' यत्र एतत् कारणं श्रूयते इति कारणाभिधानं प्रतिज्ञाय 'यत्रैत' मित्यादिना तत् प्रदर्श्यते,— 'अग्रे' पूर्वं यत्र यस्मिन् प्रस्तावे ऋषिशब्दाभिधेयाः 'प्राणा' एत मग्निं समस्कुर्वन् संस्कारप्रकारस्तु षष्ठकाण्डस्यादावुक्तः; तदाति * प्राणास्त मग्नि 'मग्नि' रेवोच्चितवतः ता आपः संस्कृता 'मण्डूका' अभवत् ॥ २१ ॥

ततः प्रजापतिः प्रसिनोऽस्याकं रसो वाय्वादित्यग्निरस्तो स प्रजापतिर्वं एतस्य 'रसस्य एव' वजस्यति वेंत्तु इति अब्रवीत्। तस्येति कर्मार्थे षष्ठी एव इति प्रत्यक्षेण निर्दिष्टम्। 'तं' वनस्पति वेतस इति परोक्षेणाप्याह। यत एव मुक्तं तेन वेतसोऽभूत् खलु 'तं' देवाः परोऽक्षकामत्वा वेतस इत्याचक्षते। अथापो यदब्रुवम् अवाक्षद्गादिति तस्मात् स रस 'अवाका अभवन्'। तांश्च देवताः परोक्षकामत्वा दवका इत्याचक्षते। "ता हैता इति। उक्त प्रकारेण 'मण्डूकाः' साक्षादेवापः वेतसोऽपि तद्रसवेदामान् अवकास्तुत इमात्मकत्वादिति सर्वेप्येते मण्डूकादयः अवकात्मका इति। ता एता स्त्रिविधा आपः खलु तस्मात्ते रवकर्षणैरेता स्त्रिविधाभिरप्यद्भिरेन मग्निं शमयितवान् भवति ॥ २२ ॥

---

* "तद्देते—इति ज।

इत्थं मण्डूकादीना मप्रात्मकत्वेन शमयमार्थत्वं प्रद र्शयिष्यानेव कृत्स्नान्नरूपेण प्रशंसति,— "यद्वेति। पूर्वं प्रजासृष्टिनिबन्धनेन विस्रंसनेन परासुः प्रजापति इदानी चयनलक्षणेन संस्कारेण प्राणादीनां निधानात् पुन रुत्पद्यत इति चायमानाग्निलक्षणः प्रजापति र्जायत एव। जाय-मानस्य च सर्वान्नभोज्यार्थ मेवोत्पत्तेः; एषोऽपि सर्वस्मा अन्नाय जायते। मण्डूकादयश्च कृत्स्नं मन्नम्। तदेव प्रदर्श्यते,— "पशवश्च ह्येता इति। 'एता मण्डूकावकावेतस शाखाः' * क्रमेण पशव आदौ वनस्पतयश्च भवन्तीति। मण्डूकादय स्थावरजङ्गमात्मकं कृत्स्नं मन्नं अत्र प्रदर्श्यते। मण्डूकादयः सर्वे अपि च अबात्मकाः। तथापि अवकानाञ्जलैका यत्र नत्वाद-प्राप्ति वनस्पतिरूपत्वाच्च ता आप इत्युक्तम्। एवञ्च सति मण्डू-कादिभिविकर्षणेण एन मग्निं सर्वान्नेन प्रीणातीति ॥ २३ ॥

विकर्षणेन वीतरसान् मण्डूकादयोऽनुपजीवनीयः असन्नि-त्याह,— "मण्डूकेनेति पशूनाम्। पशूनां मध्ये मण्डूकेन विकृष्ट-वानिति यत् यस्मात् पशूनां मध्ये मण्डूका गतदारत्वात् पश्वन्तरवदुपकारको न भवतीति। सो अध्वर्यु रुच्यते एव मेवावका अपि मत्ताः पेयावान् भवतीति वेतसोऽपि वनस्पत्यन्तर-वत् पुष्पफलादि नोपकारको न भवतीति। एते सर्वे अनुजीव-नीयाः अभूवन्नित्यर्थः ॥ २४ ॥

---

* का० श्रौ० सू० १८. २. १०। वा० सं० १७. ६।

मण्डूकादिभिः कथं सम्भवतीति तदुपाय माह— स तानोति सोऽध्वर्युः 'तानि' मण्डूकादीनि 'वंशे प्रबध्य' विकर्षणेनेति शेषः। पूर्वं मग्निस्थलस्य सामान्येन विकर्षण मुक्तम्। अथैनं विकर्षति। सर्वतो विकर्षतीति। तत्रे-दानीं कस्मिन् कस्मिन् प्रदेशे केन केन प्रकारेणेति विशेष जिज्ञासाया माह ;— "दक्षिणार्द्धेनेति। परिश्रिता मन्तरेणाग्नि-स्थानस्य भागस्य दक्षिणभागे प्रथमं 'प्राग्' अपवर्गं कर्षति। "समुद्रस्यत्वेवेति * मन्त्रेणेत्यर्थः। दक्षिणार्द्धेनेति व्यत्ययेन तृतीया। समुद्रस्य त्वावकयाग्ने परिव्ययामसीत्यस्य तात्पर्य माह — "समुद्रियाभिस्त्वेति। समुद्रशब्देनात्र जलाशय उच्यते। समुद्र सम्बन्धिनीभिरद्भि 'स्त्वां शमयाम' इत्येतदुक्तं भवति। अवकाया अवात्मकत्वात् तया संस्तरणेन शमनस्य निष्पा-दनादित्यर्थः। "समुद्रियाभिरिति समुद्रा भाद्य † इति प्रत्ययः। तस्य चायनेयी इत्यादि सूत्रेणापि यादेशः। हे 'अग्ने' 'त्वां' समुद्रसम्बन्धिन्या 'अवकया' यदि 'परिव्ययामसि' परितः शब्द गुण: इदन्तो मसि रित्युत्तमपुरुष बहुवचन सकार-स्यान्ते इकारागमः। तेन संस्तरणेन शान्त स्त्वं 'अस्मभ्यं' अस्म-दर्थं पावयति शोधयतीति 'पावकः' पावयिता 'शिवः' शान्तः आनुकूल्यवान् भवति मन्त्रस्यार्थः ॥ २५ ॥

* वा० सं० १७. ४।

† पा० सू० ४. ४. ११८।

उक्त प्रकारेण दक्षिणभागे विकृष्य पश्चिमभागे उदगप-वर्गं "हिमस्यत्वेत्यनेन मन्त्रेण * विकर्षेदित्याह,— "अथ जघनार्द्धेनेति। 'यद्वै शीतस्य' इत्यादिकस्यायमर्थः— 'यत्' खलु 'शीतस्यापि प्रशीतं' प्रकृष्टं शीतं 'तद्धिमस्य जरायु जरायुशब्दो गर्भवेष्टनवचनः अतश्च जरायुर्यथा गर्भ माच्छा-दयति तद्वदधिकं शीतमभिभवेमाच्छादयतीति। हिमस्य जरायुणेति शीतादप्यधिकशीतत्व मुच्यते इति। अत्र अश्मा-त्मका मण्डूकादय एव हिमस्य जरायुणेत्यनेन विवक्ष्यते। तेन च शब्देन तेषा मभिधानं प्रकृष्टशमनसमर्थत्वात् सूचनार्थ मिति प्रतिपत्तव्यम् ॥ २६ ॥

अथोत्तरभागे प्रागपवर्गं "उपज्मन्नुपेति † मन्त्रेण विकर्ष-णेति विधत्ते— "अथोत्तरार्द्धेनेति मन्त्रस्तु स्पष्टार्थ इत्याह यथैवेति ॥ २७ ॥

अथ पूर्वभागे "अपा मिद मित्यादि ‡ मन्त्रेण दक्षिणापवर्गं विकर्षत्याह अथ पूर्वार्द्धेनेति। अय मपि मन्त्रस्पष्टार्थ इत्याह— "यथैवेति हे अग्ने यदेतत् मण्डूकावकावेतसः शाखालक्षणं खलु इदं अपान्ययनं नितरां स्थानं अपा मल्पीयस्त्वेति तदय मस्त्वं सम्भवतीति। तत्राह समुद्रस्येति नह्यल्पीयसी मपानयन मेतत्। अपि तु 'समुद्रस्य' जलनिधिरेव 'निवेशनं' निवे-

---

* वा० सं० १७. ५ ।

† वा० सं० १७. ६ ।

‡ वा० सं० १७. ७ ।

शेतेऽस्मिन्निति निवेशनं अधिकरणे ल्युट् स्थाने मित्यर्थः। एवञ्च तथाविधेन मण्डूकादिना विक्रष्यसे यतः अतस्त्वां ब्रवीमि ते हेतयो ज्वालाः अस्मादन्यां 'तपन्तु अस्मभ्यं' तु त्वं पावकं 'शिवश्च' भवति मन्त्रार्थः। तद्यागे विकर्षणप्रकारं हस्ताभिनयेन दर्शयन दक्षिणभागादिक्रमेण विकर्षणात् सिद्धं प्रादक्षिण्यक्रमं प्रशंसति। इत्यग्ने विकर्षतीति,— "देवत्रेति। देव मनुष्येभ्यो * सूत्रेण देवार्थे त्रा प्रत्ययः। देवं देवं देवोचितं भवतीत्यर्थः॥ २८॥

आत्मभागविकर्षणस्य प्राथमिकत्व मुपपादयति,— "आत्मान मिति दक्षिणार्द्ध मैत्यादिना विहितं विकर्षण मन्त्रेणात्मभागे एव क्रियते। अतश्चाग्ने आत्मानं विकर्षतीत्येतदुपपन्नं कुतः सम्भवति। जायमानस्य करचरणाद्यवयवजातस्य मध्ये पूर्वमात्मभाग एव सम्भवति तत् सकाशात् करचरणादीना मुत्पत्तेरिति। अथ दक्षिणपश्चादीनां विकर्षणं विधाय तत्क्रमसिद्धं प्रादक्षिण्यं पूर्ववत् प्रशंसति॥ २८॥

अथेति पश्चादीनां विकर्षण मात्मभाग मभिलक्ष्य कुर्यादित्याह। अभ्यात्ममिति अग्न्यात्मना मभि अभ्यात्मं लक्षणेनाभिप्रती आभि मुख्य इत्यव्ययवी भावसमासः। अनयेति समासान्तष्टच् † विकर्षणानुसारेण 'शान्तिं' निहितवान् भवती-

* 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्— पा० सू० ५. ४. ५६।

† पा० सू० ५. ४. १०८।

त्याह। अभ्याम मेवेति कथ मभ्यामं विकर्षणं भवतीति; तत्राह परस्तादिति। अथ दक्षिणपश्चादीनां विकर्षणेषु मन्त्रान् विधत्ते,— अग्ने पावक रोचिषेत्यादिना मन्त्रेषु * पावकशब्दप्रयोगस्याभिप्राय माह— 'पावकं' पावक मिति 'यत्' खलु वस्तु 'शिवं' तस्यैकार्थं प्रदर्शनं 'शान्त' मिव तत् 'पावकं' भवति। अशान्तस्य शुद्धि सम्पादकत्वात् अतथाग्नेः शान्तता सिद्धये तेन शब्देन सम्बोधन मिति ॥ ३० ॥

भावः विकर्षणे विनियुक्तानां मन्त्राणां सप्तत्वसङ्ख्या प्रशंसति,— "सप्तभि रिति। 'सप्तचितिकोऽग्नि' रित्यनेन 'सप्तर्त्तवः सम्वत्सरः सम्वत्सरोऽग्नि' रित्यनेन च पृथगेवाग्नेः सप्तसङ्ख्यायागः प्रदर्श्यते। पञ्च चितयो नित्याः इतरे द्वे चिती नैमित्तिके इति सप्तचितयः अधिमासापेक्षया सप्तर्त्तवः। यस्मिन् वंशे मण्डूकादीनि वक्ष्य विकृष्टन्तं वंश मुत्करे प्रदक्षिणेदित्याह तं वंश मिति॥ ३१ ॥

अथैन मग्निं परितः सामभि र्गायेदित्याह—"अथेति। विहितं सामगान ममृतरूपतया प्रशंसति। अत्रैष इति। कथ मेतत् साम्ना ममृतरूपत्व मिति, तत्राह— "सामानीति। ऋगात्मके शरीरेव स्थानाधिकारादि पञ्चभेदविशिष्टत्वात् वा साम्ना प्राणत्वं प्राणश्चामृतं खलु प्राणसम्बन्धे मरणाभावात्। अतश्च प्राण रूपेण साम्नामप्यधमजरूपत्वात् सामगानेना मृत मुत्तमं रूपं मस्मिन्नग्नौ निदधातीत्यर्थेतश्च सामगानं सर्वतः कर्त्तव्य

---

* वा० सं० १७ ८।

मित्याह। "सर्वत इति। यतः पुनस्तदेव सामगानं प्रजापति सम्बन्धिन श्रात्मनः अनस्थिकामृतरूपत्वसाधनतया प्रशंसति ॥ २२ ॥

"यद्दैतेन मिति। एतस्मिन् काले खलु 'देवा' 'इमं' प्रजापतिसम्बन्धिनं 'आत्मानं' शरीरं 'अनस्थिकमत' एव 'कुर्वीमहीति' अकामयन्त अस्थ्याविनश्वरत्वेन तद्विशिष्टस्यापि शरीरस्य विनश्वरत्वात् तद्रहितं प्राणशरीरं कर्मलभ्यमप्यनित्यर्थः। तत स्ते येन प्रकारेण 'ममात्मान मनस्थिकं करवामहै' एतत् प्रकार मुपजानीतेत्युक्ता पश्चात् कथं तत् ज्ञानोपाय इत्यपेक्षायां "चेतयध्व मित्यब्रुवन्। तद्वाक्यस्य श्रुति स्वय मेव विवृणोति,—"चिति मित्यादिना। 'चितिं' विमर्शमिच्छतेति खलु 'ते अब्रुवन्' एव मपि किमर्थं मब्रुवन् मित्याशङ्क्याह "तदिच्छतेति। तदिति लिङ्गव्यत्ययः येन प्रकारेण 'ममात्मान मनस्थिकं' कुर्वी महि तत् प्रकार परिज्ञाय चिति मिच्छतेति ब्रुवन्नित्यर्थः॥ २३ ॥

पश्चात्ते तथा विचारयमाणा स्तदुपायत्वेन एतानि वक्ष्यमाणानि गायत्र्यादीनि सामानि दृष्ट्वा तै रेनं परि-गीयेत मात्मानं यथोद्दिष्ट मकुर्वन् अतस्तद्वदेव यजमानोऽपि कुरुते सर्वत इति। पूर्वादिभागेषु सर्वतो गानेन शरीरं सर्वतः कार्त्स्न्येन मनस्थिक ममृतं करोति। विहितं गान मासीनेन निहता वाकार्य मिति। तत्र स्वेच्छयान्यतर प्रकारेण क्लृत् प्रसक्तौ नियम माह—"तिष्ठन्निति। तत्र श्रौत्यस्यार्थ

विवरणं कृत्स्न मिति । तत्र हिङ्कारे खलु कृत्स्नं साम भवति । सामान्यरूपेण हिङ्कारे कृत्स्न मपि सामवर्त्तत इति अनेनैवाभिप्रायेण श्रुत्यन्तरेष्वुक्तं हिंकरोति । सामै वा करोति । अथैनं सामभिः परिगायतीति सामान्येन विधानात् देशविशेषे सामविशेषगान मभिधत्ते ॥ २४ ॥

"गायत्र मित्यादिना । 'तत् सवितुर्वरेण्य' * मित्यष्टाक्षरा गायत्र्या मृच्युत्पन्नं साम गायत्रम् । तत् पूर्वभागे गायेत् । एवञ्च गायत्र्या अग्निना सहोत्पन्ने तत्रोत्पन्नस्यापि साम्नोऽग्नित्वादस्य सञ्चिताखिललक्षणस्य प्रजापते रग्नि मेव शिरः प्रदेशस्त्वात् किञ्चास्य शिर एवैतेन सामगानेन 'अनस्थिक ममृतं' करोति ॥ २५ ॥

'अभित्वा शूरनोनुम' † इत्येतस्या मृच्युत्पन्नं साम रथन्तरं तद्दक्षिणपक्षे गायेत् । एवञ्चास्य पृथिवी मेव दक्षिणं पक्षं कृतवान् भवतीति आह— "रथन्तर मित्यादिना अस्याः

---

* गायत्रसाम ;—

तत्सवितुर्वरेण्यम् भर्गोदेवस्य धीमहि ।

धियो यो नः प्रचोदयात ॥

—इति उ० ६ प्र० ३ अ० १० सू० १ ऋचि ।

† रथन्तरम् ;—

अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः ।

ईशान मस्य जगतः स्वर्दृश मीशान मिन्द्र तस्थुषः ॥

—इति छ० ३ प्र० १ अ० ५ द० १ ऋचि, आ० २ प्र० १ अ० २१ साम ।

णोति। "इमे इति। हस्ताभिनयेन दर्शयति। यत इमे सर्वे रसा यस्या मवतिष्ठन्ते। अतोऽतिशयरसाधारत्वेन इयं रसवत: रसतम एव रसंतम: * तच्च परोक्षकामत्वाद्देवा रथन्तर मभिदध इत्यर्थ: ॥ २६ ॥

'त्वामिद्धि हवाम' † इत्येतस्या मृच्युत्पन्नं साम बृहत्। तदुत्तरे पक्षे गायेत्। तथावदिद मेवास्योत्तरं पक्षं कृतवान् भवतीत्याह — "बृहदुत्तरे पक्ष इति। 'बर्हिष्ठा' मतिशयेन बृहती बृहच्छब्दादतिशयार्थे इष्टनिटिलोपे च रूपम् ॥ २७ ॥

'कयानश्चित्र आभुवद्' ‡ इत्यस्या मृच्युत्पन्नं साम वामदेव्यम्। तदात्मभागे गायेदित्याह। "वामदेव्य मिति। आत्म-

* 'रसतम: रसतम एव रसंतम:'—इति क।

† बृहत्साम;—

त्वा मिद्धि हवामहे सातौ वाजस्य कारव:।

त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वत: ॥

—इति छ० ३प्र० १अ० ५द० २ ऋचि, आ० १प्र० १अ० २७ साम।

‡ महावामदेव्यसाम;—

कया नश्चित्र आ भुवदूती सदावृध: सखा।

कया शचिष्ठया वृता ॥ १ ॥

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धस:।

दृढाचिदारुजे वसु ॥ २ ॥

अभी षु ण: सखीना मविता जरितॄणाम्।

शतम्भवास्यूतये ॥ ३ ॥

—इति उ० १प्र० १अ० १२सू० १—३ ऋचु, उ० १प्र० १अ० ५ साम।

भागी वामदेव्यस्य गानेन वायु मेवात्मानं करोतीत्याह । "प्राणो वा इति । "सर्वेषा मु हैष देवाना मात्मा यद्वायुरिति । तदभावे तेषां व्यवहाराभावादित्यर्थः ॥ १८ ॥

अथ पुच्छे 'यज्ञायज्ञीयं' * साम गायेदित्याह ,— 'यज्ञा यज्ञिय मिति । 'यज्ञा यज्ञा वो ऽग्नय' इत्येतस्या मृच्युत्पन्नं साम यज्ञायज्ञीयम् । यज्ञायज्ञ शब्दोऽस्मिन्नस्तीति विग्रह्य मतोश्छः सूक्तसाम्नोरिति सामर्थ्यश्छः । छस्य इयादेशः, अत्र यज्ञायज्ञोय मिति । ह्रस्वत्वं छान्दसम् । यज्ञायज्ञीयस्य चन्द्रात्मतां प्रतिजानीते । 'चन्द्रमा वै यज्ञायज्ञीय' मिति । तदेवोपपादयति "यो हि कश्चेति । 'यज्ञः सन्तिष्ठते' सम्पूर्णता मेति । तस्याहुतीनाꣳ रसा" एनं चन्द्रमस मेतीति । अतएव देवा स्त मुपजीवन्ति । अतो यज्ञाहुति रसस्य चन्द्रं प्रति प्राप्तिद्वारा यज्ञायज्ञः क्रत्न एव यज्ञः एत मप्येति । तस्मात् 'यज्ञो यज्ञ' एत मेतीति , चन्द्रमा यज्ञायज्ञीय मित्यर्थः ॥ १९ ॥

अस्तु यज्ञायज्ञीयस्य चन्द्रात्मकत्वम् । ततः किं प्रकृते समायात मिति तु माह— चन्द्रमस मेतीति "प्रजापतेर्हृदय मिति । किञ्चित् साम तदप्यत्र गायेदित्याह— "अथेति । तत् साम आदित्यात्मना स्तौति । "असौ वा इति । आदित्यस्य हृदय

---

* यज्ञायज्ञीय साम :—

यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे ।

प्र प्र वयममृतं जातवेदसं प्रियम्मित्रम्न शꣳसिषम् ॥

—इति छ० १प्र० १अ० ४द० १ अभि. गे० १प्र० २अ० २५ साम ।

साहश्य प्रदर्शनेनोक्तं प्रजापतेर्हृदयसाहश्य प्रजापतेनोक्तं प्रजापतेर्हृदयत्वं उपपादयति । 'अस्या' लक्षण एत इति । गायत्रादीनां गानस्य स्थान विशेष उक्तः । अथैतद्गानं कस्मिन् स्थाने कर्त्तव्य मिति तत्राह,— 'आत्मन्' इति आत्मभागीति । यत्र क्वचित्क्रियतेति तत्राह — "निकक्ष इति । निकक्षावप्युभौ विद्येते इति तत्रान्यतरस्मिन् क्रियमेत्यत आह — "दक्षिणे निकक्ष इति । अतोऽस्मान्निकक्षा हृदयं 'ने दीय उत्पन्न' सन्निहितं तदीय इत्यस्यान्तिकार्थत्वात्तद्योगे 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्या' * मिति पक्षे प्रकरणात् पञ्चम्याविधानादत इति पञ्चमी इत्थं प्रजापते हृदयस्यादित्यात्मकत्वात्तस्य गानेनादित्य मेवाग्ने रात्मभागं करोतीत्याह,— "आदित्य मेवेति ॥ ४ ॥

प्रजापते र्हृदयं गायत्रादिसामवत् च कस्याञ्चिदृचि न गीयते । अपि तु केवलं प्रजाशब्दे प्रजापतिशब्दे च गीयते अतएव आपस्तम्बेन सूचितं,— "प्रजापतेः सामानृचं गायतीति † अतस्तस्य साम स्तयोः शब्दयोर्गानं प्रशंसति,— "प्रजासु चेति । न च ता प्रजासु प्रजापता वित्यभिधेय निर्देशः क्रियते नहि तत्र गानं सम्भवति अशक्यत्वात् नचायं शब्दनिर्देशः । प्रजास्विति बहुवचनवैयर्थ्यात् । अतः कथ मस्य वचनस्योपपत्तिरिति नैतदस्ति वाच्यवाचकयोर्भेद विवक्षया वाचकशब्दे क्रियमाणं गानं

---

* पा० सू० २. ३. ३४ ।

† आप० श्रौ० सू० २. १२. ७ ।

वाग्ने क्रियत इत्युपचर्यते। तद्यत् 'प्रजासु हृदयं दधाति' अथ 'यत् प्रजापतौ गायति तदग्नौ हृदयं दधातीति'। अभिधेयेफलसम्बन्धप्रदर्शनात्तदनुरोधेनाभिधेये एव गायतीति। उपचारोऽत्राभिप्रायः पूर्वं प्रजा प्रजापतिशब्दयो र्गानेन प्रजासु अग्नौ च हृदयं निधीयत इत्युक्तम् ॥ ४१ ॥

अथाग्ने स्तदुभयात्मकत्वात् तत्रैव गाने तत्रोभयत्रापि हृदयं निधीयत इत्याह,— "यद्वेवेति। प्रजाशब्देन प्रजापतिशब्देन च तस्य गान मग्नौ क्रियते। अतश्च पूर्वन्तच्छब्दयाभिधेयप्राधान्येनाग्ने रुपसर्जनत्वं मुक्तम्। अत्र तु अग्निप्राधान्येन तच्छब्दद्वयाभिधेयस्योपसर्जनत्व मुच्यत इति विभागः। "अयं वा अग्निः प्रजाश्च प्रजापतिश्चेति। स यः प्रजापतिर्व्यस्रंसतायामेव 'स योऽय मग्निश्चियत इति श्रुतेः अग्निस्तावत् प्रजाः प्रजापतेश्च सर्वप्रजा निर्मातृत्वेन तदात्मकत्वात्तद्द्वाराग्निरपि प्रजात्मक इत्यर्थः ॥ ४२ ॥

अथैतानि गायत्र्यादीनि सामानीष्टकारूपेण स्तौति— "ता हैता इति। सामानि भवन्ति प्राणा वै सामान्यमृत मु वै प्राणा अमृत मेवास्मिन्नेतद्रूप मुत्तमं दधातीति साम्नाम्नावद मृतत्वं मुक्त मेव इष्टकानां प्रतिदिश मुपधीयमानत्वादुपधानवादो तेषां प्रतिदिशं गानादिष्टकात्त्वोपचारः। एवञ्च तान्येतानि सामान्यमृतेष्टका भवन्ति। "ता हैता इति स्वोलिङ्गविशिषेयेष्टका पचे ताश्चेष्टका उत्तमाः सर्वाभ्य इष्टकाभ्यः उपरिष्ट उपरिष्ट उपदधाति। तेनास्य हूयमानस्य

सर्वस्याप्यमृत मुत्तमं दधाति। तस्मादस्य सर्वस्य प्रपञ्चस्या-मृत मुत्तमं भवति। विहितं सामगानं समाख्यानादुद्गातुः प्राप्नोतीति। तदपवाद माह—"नाध्वर्युरिति। इतरस्य गातृत्वे दोष माह—'इष्टका वा एता इति। एतेषां साम्ना मिश्रकात्वादिष्टकानां चाध्वर्युणोपधेयत्वादितरस्य * गातृत्वे तदुपधानवैधुर्येणाध्वर्युर्विजितः पराभूतो भवेदित्यर्थः ॥ ४३ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

* 'नाध्वर्युरिति इहस्य'—इति क, ग।

धान्याद्रिं धन्यजन्मा तिलभव मतुल: स्वर्णजं वर्णमुख्य: ,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्य: ।
आज्योत्थं प्राज्यजन्मा लवणज मनृण: शार्करं चार्कतेजा: ,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पापसाल्लिङ्गणार्य: * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्य्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे प्रथमोऽध्याय: समाप्त: ॥ १ ॥

---

* अत्रत्याष्टोप्यन्य: पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्या: ।

उपवसथीयेऽहन्प्रातरुदित ऽआदित्ये *। व्वाचं व्विसृजति व्वाचं व्विसृज्य पञ्चगृहीत माज्यं गृह्णीते तत्र पञ्च हिरण्यशकलान् प्रास्यत्यथैतत् अयꣳ समासिक्तं भवति दधि मधु घृतं पात्र्यां वा स्थाल्यां व्वोरुबिल्यां तदुपरिष्टाद्दर्भमुष्टिं निदधाति† ॥ १ ॥

अथाग्नि मारोहति। नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्च्चिष ऽइत्यन्वेष सर्व्वोऽग्निः संस्कृतः स एषोऽत्र तस्मा ऽअलं यद्धिꣳस्याद्यं जिहिꣳसिषेद्य मु वा ऽएष हिनस्ति हरसा वैनꣳ शोचिषा व्वार्च्चिषा वा हिनस्ति तथो हैन मेष एतैर्न्न हिनस्त्यन्यांस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यꣳ शिवो भवेति यथैव यजुस्तथा बन्धुः ॥ २ ॥

अथाग्निꣳ स्वयमातृण्णां व्याघारयति। आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ३ ॥

---

* 'आदित्ये'—इति ग, घ।

† 'निदधाति'—इति ग, घ।

स्वयमातृण्णां व्याघारयति । प्राणः स्वयमातृण्णा प्राणे तदन्नं दधाति* ॥ ४ ॥

यद्वेव स्वयमातृण्णां व्याघारयति । उत्तरवेदि-र्ह्येषाग्नेरथ याममूं पूर्व्वां व्याघारयत्यध्वरस्य साथ हैषाग्नेस्ता मेतद् व्याघारयति ॥ ५ ॥

पश्यंस्तव हिरण्यं व्याघारयति । प्रत्यक्षं वै तद्यत् पश्यति प्रत्यक्षᳪ सोत्तरवेदिः प्राणा एवेह भवन्ति परोऽक्षं वै तद्यत् प्राणाः परोऽक्ष मिव मुत्तरवेदिः ॥ ६ ॥

स्वाहाकारेण तां व्याघारयति । प्रत्यक्षं वै तद्यत् स्वाहाकारः प्रत्यक्षᳪ सोत्तरवेदिर्व्वैट्कारेणे-मां परोऽक्षं वै तद्यद्वट्कारः परोऽक्ष मिव मुत्तर-वेदिराज्येनाज्येन ह्युत्तरवेदिं व्याघारयन्ति पञ्च-गृहीतेन पञ्चगृहीतेन ह्युत्तरवेदिं व्याघारयन्ति व्यति-हारं व्यतिहारᳪ ह्युत्तरवेदिं व्याघारयन्ति† ॥ ७ ॥

---

* 'दधाति' इति ख ।

† 'व्याघारयन्ति' इति ख ।

नृषदे त्वेडिति। प्राणो वै नृषन् मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणो ऽग्निस्त मेतत् प्रीणात्य-प्सुषदे त्वेडिति यो ऽप्स्वग्निस्त मेतत् प्रीणाति बर्हिषदे त्वेडिति य ओषधिष्वग्निस्त मेतत् प्रीणाति वनसदे त्वेडिति यो वनस्पतिष्वग्निस्त मेतत् प्रीणाति स्वर्विदे त्वेडित्यय मग्निः स्वर्विदिम मेवैतदग्निं प्रीणाति ॥ ८ ॥

यद्वेवाह। नृषदे वेडप्सुषदे वेडित्यस्यै वैतान्यग्नेर्नामानि तान्येतत् प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो ऽएतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति ॥ ९ ॥

पञ्चैता आहुतीर्जुहोति। पञ्चचितिकोऽग्निः पञ्चऽर्त्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवेन मेतदन्नेन प्रीणाति* ॥ १० ॥

अथैनᳪ समुक्षति। दध्ना मधुना घृतेन

---

* 'प्रीणाति'—इति ख।

जायत ऽएष एतद्यज्जीयते स एष सर्व्वस्मा ऽअन्नाय जायते सर्व्वम्वेतदन्नं यद्दधि मधु घृतꣳ सर्व्वेणै-वैन मेतदन्नेन प्रीणाति सर्व्वतः समुक्षति सर्व्वत एवैन मेतत् सर्व्वेणान्नेन प्रीणाति ॥ ११ ॥

यद्वेवैनꣳ समुक्षति*। अत्रैष सर्व्वो ऽग्निः संस्कृतस्तस्मिन् देवा एतद्रूप मुत्तम मदधुस्तथैवा-स्मिन्नय मेतद्रूप मुत्तमं दधात्यन्नं वै रूप मेतदु परम मन्नं यद्दधि मधु घृतं तद्यदेव परमꣳ रूपं तदस्मिन्नेतदुत्तमं दधाति सर्व्वतः समुक्षत्यपि बाह्येन परिश्रितः सर्व्वत एवास्मिन्नेतद्रूप मुत्तमं दधाति दर्भैस्ते हि शुद्धा मेध्या अग्रैरग्रꣳ हि देवानाम् ॥ १२ ॥

यद्वेवैनꣳ समुक्षति। एतद्वै यत्रैतं प्राणा ऋषयोऽग्रे ऽग्निꣳ समस्कुर्व्वं स्तदस्मिन्नदोऽमुं पुर-स्ताद् भाग मकुर्व्वतादः सजूरब्दीय मथास्मिन्नेतꣳ सञ्चित ऽउपरिष्टाद् भाग मकुर्व्वत तद्यत् समुक्षति

* 'समुच्छति'—इति ख। 'समुक्षति'—इति ग।

य ऽएवास्मिंस्ते प्राणा ऋषयः सञ्चित ऽउपरिष्टाद्
भाग मकुर्व्वत तानेवैतत् प्रीणाति दध्ना मधुना
घृतेन तस्योक्तो बन्धुः ॥ १३ ॥

ये देवा देवानाम्। यज्ञिया यज्ञियाना
मिति देवा ह्येते देवानां यज्ञिया उ यज्ञियानाꣳ
संव्वत्सरीण मुप भाग मासत ऽइति संव्वत्सरीणꣳ
ह्येत ऽएतं भाग मुपासत ऽहुतादो हविषो यज्ञे
ऽअस्मिन्नित्यहुतादो हि प्राणाः स्वयं पिबन्तु मधुनो
घृतस्येति स्वय मस्य पिबन्तु मधुनश्च घृतस्य चेत्ये-
तत् * ॥ १४ ॥

ये देवा देवेषु†। अधि देवत्व मायन्निति देवा
ह्येते देवेष्वधि देवत्व मायन्ये ब्रह्मणः पुर ऽएतारो
ऽअस्येत्यय मग्निर्ब्रह्म तस्यैते पुर ऽएतारो येभ्यो न
ऽऋते पवते धाम किञ्चनेति न हि प्राणेभ्य
ऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या

* 'चेत्येतत'—इति ग।

† 'देवेषु' इति ख, 'देवेषु' इति ग।

ऽअधि स्नुष्विति नैव ते दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिंस्त ऽइत्येतत् * ॥ १५ ॥

द्वाभ्याᳫ समुच्चति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समुच्चति † ॥ १६ ॥

अथ प्रत्यवरोहति। प्राणदा अपानदा ऽइति सर्व्वं हैते प्राणा योऽय मग्निश्चितः स यदेता मत्रा-त्मनः परिदां न वदेतात्र हैवास्यैष प्राणान् वृञ्जी-ताथ यदेता मत्रात्मनः परिदां वदते तथो हास्यैष प्राणान्न वृङ्क्ते प्राणदा अपानदा व्यानदा वर्च्चो-दा वरिवोदा इत्येतद्दा मे ऽसीत्येवैतदाहान्यांस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यᳫ शिवो भवेति यथैव यजुस्तथा बन्धुः ‡ ॥ १७ ॥

प्रत्येत्य प्रवर्ग्योपसन्नां प्रचरति। प्रवर्ग्योप-

---

* 'इत्येतत्'—इति ग, घ।

† 'समुच्चति'—इति ख।

‡ 'बन्धुः'—इति ङ।

सञ्ज्ञां प्रचर्याथास्मै व्रतं वाऽव्रतं वा प्रयच्छ-त्यथ प्रवर्ग्योपसञ्ज्ञा मथ प्रवर्ग्य मुत्सादयत्याप्त्वा तं कामं यस्मै कामायैनं प्रवृणक्ति ॥ १८ ॥

तं वै परिष्यन्द ऽउत्सादयेत् । तप्तो वा ऽएष शुशुचानो भवति तं यदस्या मुत्सादयेदिमा मस्य शुग्ऋच्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत् परि-ष्यन्द ऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यद्धाप्सु न प्राश्यति तेनापो न हिनस्त्यथ यत् समन्त मापः परियन्ति शान्तिर्व्वा ऽआपस्तेनो ऽइमां न हिनस्ति तस्मात् परिष्यन्द ऽउत्सादयेत् ॥ ॥ १९ ॥

अग्नौ त्वेवोत्सादयेत् । इमे वै लोका एषो ऽग्निरापः परिश्रितस्तं यदग्ना ऽउत्सादयति तदे-वैनं परिष्यन्द ऽउत्सादयति * ॥ २० ॥

यद्वेवाग्ना ऽउत्सादयति । इमे वै लोका एषो ऽग्निरग्निर्व्वायुरादित्यस्तदेते प्रवर्ग्याः स यदन्यत्रा-

* 'ऽउत्सादयति'—इति ख ।

ग्नेरुत्सादयेदेतांस्तद्देवान् बहिर्द्धैभ्यो लोकेभ्यो दध्या-दथ यदग्ना ऽउत्सादयत्येतानेवैतद्देवानेषु लोकेषु दधाति * ॥ २१ ॥

यद्वेवाग्ना ऽउत्सादयति। शिर ऽएतद्यज्ञस्य यत् प्रवर्ग्य ऽआत्मायमग्निश्चितः स यदन्यत्राग्ने-रुत्सादयेद्बहिर्द्धास्माच्छिरो दध्यादथ यदग्ना ऽउत्-सादयत्यात्मानमेवास्यैतत् संस्कृत्य शिरः प्रति-दधाति ॥ २२ ॥

स्वयमातृण्णाया सꣳस्पृष्टं प्रथमं प्रवर्ग्य मुत्साद-यति। प्राणः स्वयमातृण्णा शिरः प्रवर्ग्य आत्माय-मग्निश्चितः शिरश्च तदात्मानं च प्राणेन सन्तनोति सन्दधात्युत्साद्य प्रवर्ग्यं यथा तस्योत्सादनम् ॥ ॥ २३ ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [ २. १. ]

* 'दधाति' इति ख।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे , त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

औपवसथ्यदिवसात् प्राचीने दिवसे कर्त्तव्यं प्रयोग मभिधाय तथा तस्मिन् दिवसे कर्त्तव्य मभिधत्ते । "उपवसथीयेहन् इत्यादिना । 'प्रातरुदित आदित्ये वाचं विसृजते' च यजमानः वाचं विसृज्येत् । यत्र पूर्वकाल मात्रे क्त्वा प्रत्ययः न हि तत्र पूर्वोत्तरप्रक्रियायाः समानकर्त्तृत्व मस्ति । यजमानस्य वाग्विसर्जनादध्वर्य्योराज्यग्रहणादिति पात्रो शरावाकारा स्थाली तु पिठरा कारां* उरुबिल्यां महामुखां व्यत्ययेन ङी-प्रत्ययः । "तदुपरिष्टादिति । यत्र प्राच्यां स्थाल्यां वा दध्यादित्रयं समासिक्तं तदुपरिष्टादित्यर्थः ॥ १ ॥

अथाग्नि मारोहतीति "दर्भमुष्टि निधानानन्तरम् तदाज्यं दध्यादित्रयं समासिक्तं तदुपरिष्टाच्चादाय "नमस्त † इति मन्त्रेणाग्नि मारोहेत् । अतएव कात्यायनः,— "उभय मादाय चित्यारोहणं नमस्त इति ‡ इति । आरोहणे नमस्त इत्यस्य मन्त्रस्य पूर्वार्द्धस्य पाठे प्रयोजन माह— "अत्रैव सर्वोऽग्नि रिति ।

---

* 'पिडरांकास (रुवि)ल्यां (!)'—इति क ।
'पिडरांकां उल्यां'—इति भ ।
'पिण्ड एकां उल्यां'—इति ञ ।

† वा० सं० १७. ११ ।

‡ का० श्रौ० सू० १८. ३. ५ ।

अत्राग्निनवसरे एषोऽग्नि सर्वः संस्कृतः साकल्येन कृतसंस्कारः अतोऽत्र स एषोऽग्नि यद्दस्तु हिंस्यात् यं जिहिंसिषेत् तस्मै चलं समर्थं हननेच्छयाहननस्य चेत्युभयस्यापि समर्थ स च यं हिनस्ति एनं 'हरसा शोचिषा वा हिनस्ति'। अतश्चास्य मन्त्रभागस्य पाठेन एन मध्वर्युं एते हरःप्रभृतिभि र्न हिनस्ति। हर इति हरणसमर्थं तेजः शोच इति शोचनसमर्थं अर्चिरिति दहने प्रशस्तं तेजः। मन्त्रस्य द्वितीयार्थं स्पष्टार्थ मित्याह। अन्यास्ते अस्मदिति हे अग्न हरसे नमोऽस्तु शोचिषे नमोऽस्तु तथा ते अर्चिषे नमोऽस्तु। अन्यास्ते अन्यात् अस्मच्छत्रून् ते हेतयः हरः प्रभृतय स्तपन्तु। अस्मभ्यन्तु त्वं पावकः शिवश्च भव ॥ २ ॥

अग्नि मारुह्य किं कुर्यादत आह— "आरुह्याग्नि मिति। प्रथम मध्यमोत्तमासु चितिषु तिस्रः स्वयमातृण्णा उपधीयन्ते। तत्र तृतीयायां स्वयमातृण्णायां व्याघारणक्रियाया इप्सितमत्वात् मध्यमो स्वयमातृण्णा मिति द्वितीया व्याघारणं नाम एकस्मात्कोणात्कोणान्तरं प्रत्याज्यधारात्त्वारणम्। तच्च व्याघारणं पञ्च गृहीतेनाज्येन क्रियेतेति * तस्योभयस्य ब्राह्मणं प्रागुक्त मित्याह— "आज्येनेति ॥ ३ ॥

अथ व्याघारणस्य स्वयमातृण्णा धारकत्वं प्रशंसति। स्वयमातृण्णायाः प्राणत्वं सप्तमकाण्डे † ऽभिहितम्। प्राणो वै स्वय-

---

* का० श्रौ० सू० १८. ३. ६।

† पुरस्तात् ७का० ४अ० २ब्रा० २ कण्डी (पृ० २६३ प० १६)।

माहात्म्या प्राणोह्येवैतत् स्वयमात्मन आतन्ते इति। अतश्चाग्निसम्बन्धिनि प्राणे तदाज्यलक्षणमन्त्रन्निहितवान् भवति। प्रकारान्तरेणापि स्वयमातृण्णायां व्याघारण मुपपादयति ॥ ४ ॥

यद्वेवेति। एषा स्वयमातृण्णा अग्ने रुत्तरवेदिः (खलु। अथ या ममु त् बुद्धौ परामर्श पूर्वा मुत्तरवेदिं व्याघारयति। सा पुनः सोमयागस्य अतोस्यां स्वयमातृण्णायां व्याघारणाग्ने रुत्तरवेदिः ) * तर्हि तद्व्याघारणे पूर्वोत्तरवेदिवत् ॥ ५ ॥

हिरण्यदर्शनादि † पूर्वकत्वेन भवितव्य मित्यत आह—"पश्यं स्तवेति। प्रत्यहं सोत्तरवेदिसंयुक्तमन्त्रादि निमित्तत्वाभावेनोपचारिकोत्तरावेदित्वादित्यर्थः ॥ ६ ॥

स्वाहाकारस्य सर्वत्र हविःप्रदानसाधनत्त्वेन प्रत्यक्ष वेट्कारस्य ‡ तु ह्रयाभावेन परोक्षत्वं आज्येन पञ्चगृहीतेन व्यतिहार मुत्तरं वेदेर्व्याघारणात् तथैवास्या अपि उत्तरवेदित्वेन व्याघारण मुपपन्न मित्याह। "आज्येनेत्यादिना। व्यतिहार मित्यनेन पूर्वं दक्षिणांसे व्याघारणं तत उत्तरश्रोणौ पश्चाद्दक्षिणश्रोणौ तत उत्तरांसे तत मध्ये इत्ययं क्रमो विवक्षितः ॥ ७ ॥

अथ क्रमेण मन्त्रान् प्रदर्श्य व्याचष्टे। "नृषदे वेडिति नृषु सीदतीति। नृषत् इति प्राणव्यतिरिक्त मपि वक्तुं

---

* 'बन्धनीचिह्नान्तः प्रदर्शितः पाठो ज-पुस्तकमात्रे नास्ति।

† का० श्रौ० सू० १८. ३. ७।

‡ वा० सं० १७. १२ ।

भक्ष्यत इति विवक्षितोऽर्थो दर्शितः— "प्राणो वै नृषदिति। नृषदित्यत्र नृ-शब्दस्य प्रसिद्ध एवार्थो विवक्षितो नेतर इत्युक्तं मनुष्या नर इति एतत् मन्त्रसाध्यव्यापारणस्य फल मुक्तम्। "तद्योऽय मिति। वेडिति सम्प्रदानार्थीयो निपातः। नृषदे मनुष्येषु वर्त्तमानाय प्राणरूपायाग्नये वेट् इद माज्य-रूपं हविर्दत्त मित्यर्थः। "अय मग्निः स्वर्विदिति। 'अयं' सवित्रोग्निः 'स्वर्वित्' स्वर्गं लभयतीति स्वर्वित् स्पष्टार्थ मन्यत् ॥ ८ ॥

प्रकारान्तरेण मन्त्राणा मभिधानं प्रशंसति— "यद्वेवाह अप्सुषदे वेडिति * इत्यत्रेति शब्दः प्रकारवाचीनेन बर्हिषदे वेडित्यादीन्यपि संगृहीतानि भवन्ति। एतानि नृषदित्या-दीनि अस्यैव सञ्चिताग्नेर्नामानि अस्य सर्वात्मकत्वेन मनुष्यादि-स्थिताग्न्यात्मकत्वात्। अत एनेन नान्येवनामानि प्रीणित-वान् भवति। न केवलं तेषां प्रीणनं अपि तदेव ताद्रूप-सम्पत्तिरपीत्याह,— "तानीति। 'यस्यै खलु देवतायै हविर्गृह्यते सा देवता न' भवति। अतोऽत्र नृषदादि नामानि चतुर्थ्यं तान्युच्चार्यहोमविधानात्तदर्थं हविर्ग्रहण मिति हविषा तानि नामानि देवतां कृतवान् भवति। किञ्च नृषदादि शब्दाभि-धेयानाग्निनामग्राह मस्मिन् सञ्चितेऽसौ निदधाति ॥ ९ ॥

आहुतीनां पञ्चत्वसञ्ज्ञाग्नेः कार्त्स्न्येन प्रीति भवतीत्याह,—

---

* का० श्रौ० सू० १८. ३. ६। वा० सं० १७. १२।

"पश्चेता इति। पञ्चगृहीत माज्यं दध्यादिकञ्चेत्युभय मध्यग्ने-रुपयानीत तत्राज्यस्य विनियोगोऽभिहित: ॥ १० ॥

अथावशिष्टस्य विनियोग माह— "अथैन मिति। तदु-पयोग माह, "जायत एव इति ॥ ११ ॥

दध्यादीनां बहुत्वात् सर्वासत्त्वं विहितं तत् समुच्चर्य परिश्रितो बहिरपि कर्त्तव्यं मित्याह,— "सर्वत इति *। उपरिष्टाद्दर्भमुष्टिं निदधातीत्युक्तान् दर्भान् समुच्चये विनियुज्य प्रशंसति,— "दर्भै रिति। 'अग्रं हि देवाना मिति' हि शब्द: शाखान्तरप्रसिद्धिं द्योतयति। अतएव तैत्तिरीयके श्रूयते,— "यत् पवित्रं दिनं तद्देवाना मिति" †। अथ ते दध्यादिभि: समुच्चयी नामान् संस्कृतेऽग्नौ उत्तमरूपनिधानं भवतीति प्रशंसति। यद्वेवेति 'अन्नं वै रूप' मित्यादिना परमरूपत्व मुपपाद्यते। अन्नस्तावद्रू-पकारणत्वाद् रूपं परमत्वं तु दध्यादीनां रसातिशयवत्वादिति दध्यादीनि परमं रूप मित्यर्थ: ॥ १२ ॥

अथ पुनस्तान्येव दध्यादीन्यग्रेरुपरिष्टाद्भागरूपेण प्रशं-सति— "यद्वेवैन मिति। अग्ने पूर्वं 'यत्र' यस्मिन्नवसरे ऋषिशब्दाभिधेया: 'प्राणा' विस्रस्तं प्रजापतिं 'समस्कुर्वन्' तदद: काले 'अद:' शब्दस्तस्य कालस्य विप्रकर्ष मभिधत्ते। 'असुं भाग' मकुर्वत 'अमु' मित्यपि विप्रकृष्टो भाग उच्यते।

---

* "सर्वत: समुच्चत्यपि बाह्येन परिश्रित इति"—इति का० श्रौ० सू० १८. ३. ८।

† तै० ब्रा० १. ६. ८. ६।

'अमुं भाग' मिति यदुक्तं तदेवाह अतः (!) 'सजूरब्दीय' मिति सजूरब्दो ऽअयवोभिरित्येतेन मन्त्रेण प्रतिपादितं होमरूप मत्र' अथाग्निन् सञ्चितेऽग्नौ एवं तं दध्यादिलक्षण मुपरिष्टाद्भाग मकुर्वंस्तानेव प्रीणाति। सञ्चितस्याग्नेः प्राणविशिष्टत्वेन प्राण-रूपतोऽग्नेर्भागः प्राणाना मपि भवतीति तस्याग्नेरनेनोपरिष्टाद् भागेन 'तानेव' प्राणान् प्रीणितवान् भवतीत्यर्थः। दध्यादि-विषयं ब्राह्मणम् प्रागुक्त मित्याह,— दध्नेति। तच्च सप्तम-काण्डे कूर्मोपधानकथनावसरेऽभिहितम् * ॥ १३ ॥

अथ समुच्चये प्रथमं मन्त्रं दर्शयन् व्याचष्टे— "ये देवा देवाना मिति † देवा 'यज्ञियानां' यज्ञार्हाणा मपि यज्ञिय' तत् पूर्व कथ मेव सर्वेषां यज्ञार्हत्वादित्यर्थः द्वितीय तृतीय मादौ प्रसिद्धार्थौ वित्याह 'संवत्सरीणा' मिति। एतस्य समुच्चयस्य संवत्सराद् क्रियमाणत्वादेतत् 'संवत्सरीणो भाग' यतः प्राणादध्यादीनामहुता-न्येषादग्नि अतोऽहुतादौ 'हविष' इत्युक्तम्। चतुर्थपादे मधुनो घृतस्येत्यनेन प्रकृत मेव मध्यादि उच्यत इत्याह— ("संवत्स-रीणा मिति। एतस्य समुच्चयस्य संवत्सराद् क्रियमाणत्वा-देतत् 'संवत्सरीणो भाग' यतः) ‡ स्वयमस्येति ॥ १४ ॥

अथ द्वितीय मन्त्रं व्याचष्टे—"ये देवा देवेष्विति §। 'देवाश्चेते'

---

* पुरस्तात् ७ का० ४ प्र० १ ब्रा० १ कण्डी।

† वा० सं० १७. १३।

‡ बन्धनीचिह्नान्तः प्रदर्शितः पाठो ज-पुस्तकमात्रे अधिकः।

§ वा० सं० १७. १४।

इति। एते देवाः प्राणादेवेषु 'अधि देवत्वं' अधिका देवास्तेषां भाव स्तत्व 'मायन्' प्राप्नुवन् तान्प्रति स्तेषा मुपासाव्यत्वात्। अत उक्तं 'ये देवा देवेष्विति' द्वितीयपादे सर्वात्मकत्वम्। ननु हस्त्वाद्ब्रह्मशब्देनाग्नि रुच्यत इत्याह,— "अयमग्निरिति। तृतीयपादः प्रसिद्धार्थ इत्याह—"न हि प्राणेभ्य इति। तुरीयपादे ऽभिप्रेतं विशेषमाहानेवति इति। 'ते' प्राणादित्यपि 'न' सन्ति पृथिव्या मपि न सन्ति 'किं' तु यदेव प्राणभृदस्तु तस्मिन् सन्तीत्ये-तदुक्तं भवति। देवाना मपि देवा यज्ञियाना मपि यज्ञिया ये प्राणाः संवत्सर सम्बन्धिनं भाग मुपासते। अस्मिन् पक्षे हविषा हुताग्नस्मात्पर स्ते स्वयमस्य मधुनो घृतस्य पिबन्तु मधुनो घृतस्येति व्यत्ययेन कर्मणो षष्ठो, मधु घृतं उपलक्षण मेतत्। दध्यपि पिबंत्विति प्रथमस्यार्थः। ये देवाः देवेष्वपि अधिक-देवत्वं प्राप्नुवन् किञ्च ये अस्या अग्नेः पुरो गन्तारो भवन्ति येभ्यो विना किञ्चिदपि शरीरं न प्रवर्त्तते प्राणा दिवः सानुषु पृथिव्या अपि सानुषु न सन्ति। किन्तु यदेव प्राण-भृत् तत्रैव सन्तीति द्वितीयस्यार्थः। 'सानु' शब्दस्य (यदा-दिषु मास्तृत् स्नूना मुपसङ्ख्या मितिस्तु आदेशम्। समुच्चण-मन्त्रयो र्हिस्वसञ्ज्ञां अग्नेः समुच्चणसाकल्ये हेतुत्वेन प्रशंसति ॥१५॥

"द्वाभ्या मिति। यजमानस्याग्निचयनेनाग्नित्वप्राप्ते यजमानो-ऽग्निः समुच्चणानन्तरम् प्रत्यवरोहेदित्याह यथेति) * ॥ १६ ॥

---

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र।

धवरोहणमनुजपस्यानयनमव्यतिरेकयो र्गुणादोषाभावात् 'सर्वे हैत' इत्यादिना 'योऽय मग्नि' वचनेन संस्तुतः एव सर्वे प्राणाः प्राजापत्यात्मकत्वात् सर्वेषां प्राणा इत्यर्थः। अतः सोऽध्वर्यु रवावसरे यदि 'आत्मन' एतां "प्राणदा* इत्येतान् मन्त्ररूपां प्राणरचणं न वदेत तर्हि एषोऽग्निरस्याध्वर्योः 'प्राणान् वृञ्जीत' वर्जयेदपगमयेदित्यर्थः। प्राणादेत्यादिमन्त्ररूप परिहाभिधाने तु तथा न कुर्यात्।

इत्थं मन्त्ररूपस्योपयोग मभिधायाथ मन्त्रं व्याचष्टे— "प्राणदा इति †। "एतद्वा मेऽसीत्येतदिति। 'मे' मदर्थं एषां प्राणादीनां भासीत्येतदेवोक्तं भवति न पुनरन्यार्थं मित्यर्थः। हे अग्ने त्वम् मे प्राणापानाव्यानानां वर्चसो धनस्य च दातासि। अतो ब्रवीमि ते हेतयो ऽस्मादन्यां 'तपन्तु' 'अस्मभ्यं' तु 'पावकः शिवश्च भव' ॥ १७ ॥

अग्नेरवतरणा पश्चात् कर्त्तव्यं प्रयोग माह— "मत्येत्येति। अथास्मा इति 'अस्मै' यजमानाय 'व्रतं' पयः कृत्वा 'वा अर्द्धव्रतं प्रयच्छति' 'अथ' तदा मैवोपराङ्गिकाभ्यां 'प्रवर्ग्योपसदौ प्रचर्य' अथ प्रवर्ग्यं मुत्सादयति 'यज्ञेकामायेनं प्रहृणक्ति' तस्य कामस्याप्तेः स्यात् इत्यर्थः ॥ १८ ॥

'प्रवर्ग्य मुत्सादयति' सामान्येन विधानाद्यत्र क्वचित् प्रसक्तावाह,— "तं वा इति। परितः अन्दो जलस्रवणं यत्र

---

* "प्राणदा इत्यवरोहति"—इति का० श्रौ० सू० १८. ३. ८।

† वा० सं० १७. १५।

परिष्यन्दो द्वीपः * ननु पृथिव्या मप्सु वा कस्मान्नोत्साद्यत इत्याह,— "तमो वा इति। एष प्रवर्ग्यं स्तप्तत्वाच्छोक-विशिष्टो भवति। अतस्तं यदि पृथिव्या मुत्सादयेत् तदा तस्य शोकः पृथिवीं प्राप्नोति। अथ यद्यप्सु उत्सादयेत् तस्यापः शोकापः प्राप्नोति। तस्मात् तत्र नोत्सादनीयः किन्तु परिष्यन्दे तथा च पृथिवी मपश्च न हिनस्ति ननु परिष्यन्द उत्सादनेऽपि तत्र तदुभय सम्भवात् कथं तासां हिंसाभावः इति। तत्राह,— "यदद्भिरिति। अपां मध्ये-मुत्सादयो हिनस्ति यद्द्वीपे पृथिवी मेवोत्सादयति। तथा परिमितः शान्तिहेतु भूताभिरद्भिर्वेष्टयितत्वात् पृथिव्या अपि हिंसानास्तो इत्यर्थः ॥ १९ ॥

प्रवर्ग्योद्वासनस्य स्थानान्तरं विधत्ते— "अग्नौत्वेवेति। पूर्वोक्त परिष्यन्दे अग्नौ वा प्रवर्ग्य उत्साद्यते इति विकल्प-विधान मेतत्। अतएव कात्यायनः— "अग्नौ परिष्यन्दे वा इति †। तत्तस्य प्रवर्ग्यस्य परिष्यन्द एवोद्वासने कस्यचिदपि बाधाभावादस्याप्यग्नेः परिष्यन्दस्य माह— "इमे वै लोका इति। पृथिव्यादिलोकात्मकस्याग्नेः समुद्रवद्दृष्टमात् परिश्रिता-मेवात्मकत्वम् ॥ २० ॥

---

* "अग्नौ इष्टकाचितः स्थलरूपे॰ परिष्यन्दे यस्य परितः आपः स्यन्दन्ते परिगच्छति परिष्यन्दो द्वीपः जलमध्यस्थो जलानाच्छादित उच्चप्रदेशः"—इति का॰ श्रौ॰ सू॰ १८. ३. ११।

† "उपसदन्ते प्रवर्ग्योत्सादनं यथोक्त मग्नौ परिष्यन्दे वा"—इति का॰ श्रौ॰ सू॰

अथाग्नाविवोद्वासनं प्रशंसति,— "यद्वेवेति। अग्न्यादयो देवादीप्यमानत्वेन 'प्रवर्ग्या' अतश्च लोकत्रयात्मकादग्नेरग्न्यादि प्रवर्ग्योत्सादने अग्न्यादीनेवैतेभ्यो लोकेभ्यो बहिर्धा कुर्यात्। अग्नौ तदुद्वासने तु एष्वेव लोकेषु अग्न्यादीन्निहितवान् भवति। अग्नावुत्सादयतीति लोपः शाकल्यस्येति * वकारस्य लोपः ॥ २१ ॥

अथ पुनस्तत्रैवोद्वासनं यज्ञस्य शिरः शरीरसन्धानरूपेण प्रशंसति;— "यद्वेवाग्ना उत्सादयतीति ॥ २२ ॥

यदास्वग्न्यावुत्सादनं तदोद्वासने विशेष माह— "स्वयमातृण्ण-येति। 'प्रथमं प्रवर्ग्यं स्वयमातृण्णाया संस्पृष्ट' मुद्वासयेत्। एवञ्च स्वयमातृण्णायाः † प्राणरूपत्वात् प्रवर्ग्यात्मकस्य यज्ञस्य शिरसः चितिताग्न्यात्मकस्य यज्ञशरीरस्य प्राणेन सन्धानं करोति। "सन्द-धातीति। अस्यैव विवरणं 'उत्साद्य प्रवर्ग्य मिति'। तस्य प्रव-र्ग्यस्य यथा येन प्रकारेण प्रवर्ग्यकाण्डोक्तप्रकारेण उत्सादन मुक्तं तेन प्रकारेण प्रवर्ग्य मुत्सादयेत् प्रत्येत्याग्निं प्रहरिष्यन्नित्या-द्युक्तकालक्रियापेक्षयोत्साद्येतिल्यबन्तस्य प्रयोगः ॥ २३ ॥ १ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

---

* पा० सू० ८. ३. १६।

† का० श्रौ० सू० १८. ३. १२।

## ॥ अथ द्वितीयं ब्राह्मणम् ॥

प्रत्येत्याग्निं प्रहरिष्यन् * । आहुतीश्च जुहोति समिधश्चादधात्येतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैन मय मेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णीते तस्योक्तो बन्धुः † ॥ १ ॥

अथ षोडशगृहीतं गृह्णीते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितेनैवैन मेतदन्नेन प्रीणाति यदु वा ऽआत्मसम्मित मन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयो न तदवति समान्याᳬ स्रुचि गृह्णीते समानो हि स य मेतत् प्रीणाति व्वैश्वकर्म्मणाभ्यां जुहोति व्विश्वकर्म्माय मग्निस्त मेवैतत् प्रीणाति तिस्र ऽआहुती-

---

* 'प्रहरिष्यन्'—इति ग, घ ।

जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति * ॥ २ ॥

अथ समिध ऽआदधाति । यथा तर्प्पयित्वा परिवेविष्यात्ताद्दक्तदौदुम्बर्यो भवन्त्यूर्ग्वै रस उदुम्बर ऽऊर्ज्जैवैन मेतद्रसेन प्रीणात्यार्द्रा भवन्त्येतद्वै वनस्पतीना मनार्त्तं जीवं यदार्द्रं तद्यदेव वनस्पतीना मनार्त्तं जीवं तेनैन मेतत् प्रीणाति घृते न्युत्ता भवन्त्याग्नेयं वै घृतꣳ स्वेनैवैन मेतद् भागेन स्वेन रसेन प्रीणाति सर्व्वाꣳ रात्रिं वसन्ति तत्र हि ता रसेन सम्पद्यन्ते तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति ॥ ३ ॥

यद्वेवैता आहुतीर्जुहोति । एतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेन समस्कुर्व्वन्नेताभिराहुतिभिस्तथैवैन मय मेतदेष्यन्तं पुरस्तादन्नेन संस्करोत्येताभिराहुतिभिः ॥ ४ ॥

---

* 'प्रीणाति'—इति ख ।

| | Rs. | As. |
|---|---|---|
| Nyāyavārtika (Text) Fasc. 1-6 @ /10/ ... ... | 3 | 12 |
| *Nirukta, (Text) Vol. IV, Fasc. 1-8 @ /10/ each ... ... | 5 | 0 |
| *Nītisāra, Fasc. 2-5, @ /10/ each ... ... ... | 2 | 8 |
| Nityacārapaddhati Fasc. 1-7 (Text) @ /10/ each ... ... | 4 | 6 |
| Nityacraāpradiph, Fasc. 1-8 @ /10/- ... ... ... | 5 | 0 |
| Nyāyabindutikā, Fasc 1 ... ... ... ... | 0 | 10 |
| Nyāya Kusumāñjali Prakarana (Text) Vol. I, Fasc. 2-6, Vol. II, Fasc. 1-3 @ /10/ each ... ... ... ... | 5 | 0 |
| Padumawati, Fasc. 1-5 @ 2/ ... ... ... ... | 10 | 0 |
| Pariciṣta Parvan, Fasc. 3-5 @ /10/ each ... ... ... | 1 | 14 |
| Prāk ta - Paingalam, Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| Prithivirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Ditto (English) Part II Fasc 1, @ 1/- ... ... | 1 | 0 |
| Prāk ta Lakṣaṇam, Fasc. 1 @ 1/8/- ... ... ... | 1 | 8 |
| Parācara Smriti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... | 12 | 8 |
| Parācara, Institutes of (English) @ 1/ ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... | 3 | 12 |
| *Sāma Vēda Saṁhitā, Vols. I, Fasc. 7-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8; @ /10/ each ... ... ... | 19 | 6 |
| Sānkhya Sūtra V tti, Fasc. 1-4 @ /10/ ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| *Sankara Vejay, Fasc. 2-3 @ /10/ ... ... ... | 1 | 4 |
| Shaddarsana-Samuccaya, Fasc. 1-2 @ /10/ ... ... ... | 1 | 4 |
| Sraddha Kriya Kaumudi, Fasc. 1-6 ... ... ... | 3 | 12 |
| Sucruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Suddhi Kaumudi, Fasc. 1-4 ... ... ... ... | 2 | 8 |
| *Taittereya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... | 11 | 14 |
| * Ditto Brāhman, Fasc. 6-25 @ /10/- ... ... | 12 | 8 |
| Ditto Prātisākhya, Fasc. 1-3 @ /10/- ... ... | 1 | 14 |
| Tāṇdya Brāhmaṇ, (Text) Fasc. 6-19 @ /10/ each ... ... | 6 | 14 |
| Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ ... ... ... | 7 | 8 |
| Tattva Cintāmaṇī, Vol. I, Fasc. 1-9; Vol. II, Fasc. 2-10; Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V. Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... ... | 23 | 12 |
| Tattvārthādhigama Sutrom, Fasc. 1-3 ... ... ... | 1 | 14 |
| Trikāṇda-Maṇdanom, Fasc. 1-3 @ /10/ ... ... | 1 | 14 |
| Tul'si Satsai Fasc. 1-5 @ /10/ ... ... ... | 3 | 2 |
| Upamita-bhava-prapañcha-kathā Fasc. 1-11 @ /10/ each ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/ ... ... | 6 | [illegible] |
| Vallāla Carita, Fasc. 1 ... ... ... ... | 0 | 10 |
| Varsa K yā Kaumudi, Fasc 1-6 @ /10/ ... ... ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3-6; Vol. II, Fasc. 1-7, @ /10/ each | 6 | 14 |
| Vidhāno Pārigāt, Fasc 1-8: Vol II Fasc 1 ... ... ... | 5 | 10 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| V hat Sayambhū Purāṇa, Fasc. 1-6 ... ... ... | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each ... | 1 | 14 |
| *Tibetan Series.* | | |
| Pag-Sam Thi Śiñ, Fasc. 1-4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 2-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... | 14 | 0 |
| Rtogs brjod dpag Akhari Śiñ (*Tib.* & *Sans.* Abadān Kalpalatā,) Vol. I, Fasc. 1-5; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... | 11 | 0 |
| *Arabic and Persian Series.* | | |
| Ālamgīrnamah, with Index, (Text) Fasc. 1-13 @ /10/ each ... | 8 | 0 |
| Āl-Muquaddasi (English) Vol. I, Fasc. 1-3 @ 1/ ... ... | 3 | 0 |
| Āin-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... | 33 | 2 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/ each ... ... ... ... | 34 | 0 |
| Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/8/ ... ... | 55 | 8 |
| Ditto (English) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-4 @ 1/4/ ... | 15 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | 0 | 10 |
| *Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /10/ ... ... | 11 | 14 |
| Catalogue of Arabic Books and Manuscripts 1-2 ... ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... | 3 | 0 |
| Conquest of Syria, Fasc. 1-9 @ /10/ ... ... ... | 5 | 10 |
| Dictionary of Arabic Technical Terms & Appendix Fasc 1-21 @ 1/8/- ... | 31 | 8 |

The other Fasciculi of these works are out of stock, and complete copies cann / supplied.

| | Rs | |
|---|---|---|
| Farhang-i-Rashidi, (Text) Fasc. 1-14 @ 1/8/ each ... | 21 | 0 |
| Fihrist-i-Tusi, or Tusy's list of Shy'ah Books Fasc. 1-4 @ 1/ each ... | 4 | 0 |
| Futūh-ush-Shām of Wāqidī, Fasc. 1-9 @ /10/ each ... ... | 5 | 10 |
| Ditto of Azādī, (Text) Fasc. 1-4 @ /10/ each ... | 2 | 8 |
| Haft Āsmān, History of the Persian Masnawi, Fasc. 1. @ /12/ ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... | 7 | 8 |
| Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Işābah, with Supplement, (Text) 51 Fasc. @ 1/ each ... ... | 51 | 0 |
| Maāsir-ul-Umarā, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. III, Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12; @ 1/- each ... ... | 35 | 0 |
| Maghāzi of Wāqidī, (Text) Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Muntakhabu-t-Tawārikh, Fasc. 1-15 @ /10/ each ... ... | 9 | 6 |
| Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... ... | 15 | 0 |
| Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ... | 11 | 14 |
| Ma'āsir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Nukhbatu-l-Fikr, Fasc. 1 ... ... ... ... | 0 | 10 |
| Nizāmī's Khiradnāmah-i-Iskandarī, Fasc. 1-2 @ /12/ each ... | 1 | 8 |
| Riyāzu-s-Salātīn Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Ditto Ditto (English) Fasc. 1-5 @ 1/ ... ... | 5 | 0 |
| Tabaqāt-i-Nāşirī, Fasc. 1-5 @ /10/ each ... ... | 3 | 0 |
| Ditto (English) Fasc. 1-14 @ 1/ each ... ... | 14 | 0 |
| Ditto Index ... ... ... ... | 1 | 6 |
| Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barnī Fasc 1-7 @ /10/ each ... | 4 | 12 |
| Tārīkh-i-Fīrūshāhī, of Shams-i-Sirāj Alīf, Fasc 1-6 @ /10/ each ... | 3 | 0 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... | 3 | 0 |
| Tuzuk-i-Jahāngīrī, (English) Fasc. 1 ... ... ... ... | 1 | |
| Wīs o Rāmīn, (Text) Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Zafarnāmah, Vol. I, Fasc. 1-9 Vol. II, Fasc. 1-8 @ /10/ each ... | 10 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches, Vols. XIX and XX @ 10/ each ... ... 20
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members.
   *N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Journal and Proceedings, N. S., 1905, to date, @ 1-8 per No. to members and Rs. 2/ per No. to Non-members.
5. Memoirs 1905 to date. Price varies from No. to No. Discount of 25% to Members.

| | | Rs | |
|---|---|---|---|
| 6. | Centenary Review of the Researches of the Society from 1784-1883 ... | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... ... | 4 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... | 4 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal ... ... | 3 | 8 |
| 8. | Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... | 40 | 0 |
| 9. | Moore and Hewitson's Descriptions of New Indian Lepidopters, Parts I—III with 8 colored plates, 4to. @ 6/ each ... ... | 18 | 0 |
| 10. | Tibetan Dictionary, by Csoma de Körös ... ... ... | 10 | 0 |
| 11. | Ditto Grammar ,, ,, ... ... ... | 8 | 0 |
| 12. | Kaçmīraçabdāmṛta, parts I and II @ 1/8/ ... ... ... | 3 | 0 |
| 13. | A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... ... | 1 | 0 |
| 14. | Memoir on maps illustrating the Ancient Geography of Kaçmīr, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... ... | 4 | 0 |
| 15. | Persian Translation of Hāji Bābā of Ispāhān, by Hāji Shaikh Ahmad-i-Kirmāni and edited with notes by Major D. C. Phillott. ... ... | 10 | 0 |

| | Rs | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... | 34 | 0 |
| Nepalese Buddhist Sanskrit Literature, by *Dr.* R. L. Mitra ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society," only.

BOOKS ARE SUPPLIED BY V.-P.-P.

BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NO. 1316.

# ॥ शतपथब्राह्मणम् ॥

## ॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE CATAPATHA BRĀHMAṆA

OF THE WHITE YAJURVEDA,

WITH THE

COMMENTAY OF SAYANACHARYA.




EDITED BY

LATE ACHARYA SATYAVRATA SAMASRAMI'S

son and pupil

**PROF. HITAVRATA SAMAKANTHA.**

*Assistant Lecturer, Vedas, The University of Calcutta.*

VOL. IX. FASC. II.

CALCUTTA:

PRINTED BY S. V. CHATTERJI, SATYA PRESS, 16/1, GHOSE LANE.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1, PARK STREET,

1912.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No, 1, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM THE SOCIETY'S AGENTS,—

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*,

AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

***Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.***

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| Title | | |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc 1-5, Vol, IV, Fasc. 1-8 @ /10/ ... ... ... | 14 | 6 |
| Aitareyālochanum, (the preface of the Ditto) by Ācārya S. V. Sāmasramī ... | 2 | 0 |
| *Anu Bhāshya, Fasc 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Atmatattvaviveka, Fasc. I ... ... ... ... | 0 | 10 |
| Acvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (*Sans. and Tibetan*) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-8 @ 1/ each ... ... ... ... | 16 | 0 |
| Bālam Bhaṭṭī, Vol I Fasc 1-2, Vol II Fasc I @ /10/ ... ... | 1 | 14 |
| Baudhāyana Srauta Sutra, Fasc. 1-3, Vol II Fasc I-3 @ /10/ each ... | 3 | 12 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-5 Vol II, Fasc. l, @ /10/- ... ... | 4 | 6 |
| Bauddhastotrasangraha ... ... ... ... | 2 | 0 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicāryāvatāra of Cāntidevi, Fasc. 1-5 ... ... ... | 3 | 2 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | 1 | 44 |
| Çatadusani, Fasc. 1-2 ... ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa Vols. I Fasc 1-7, II Fasc 1-5, III Fasc 1-7, V Fasc 1-4 | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/ each ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/, Vol IX. Fasc. I. ... | 3 | 12 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmaṇi, (Text) Vols. II, 1-25; III. Part I, Fasc. 1-18, Part II, Fasc. 1-10; Vol. IV, Fasc. 1-6 @ /10/ each ... ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each ... ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 8-9 @ /10/ ... ... ... | 1 | 4 |
| Çlokavārtika, (English) Fasc. 1-7 @ 1/4/- ... ... ... | 8 | 12 |
| Çrauta Sutra of Çānkhāyan, (Text) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4, Vol IV Fasc. 1 @/10/ each ... | 10 | 0 |
| Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dān Kriyā Kaumundi, Fasc. 1-2 ... ... ... | 1 | 4 |
| Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7... ... ... | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc. 1-4 ... ... | 3 | 2 |
| Gobhiliya G hyo Sutrum, Vol. I, @ /10/ each ... ... ... | 3 | 2 |
| Ditto Vol. II, Fasc. 1-2 @ 1/4/ each ... ... | 2 | 8 |
| Ditto (Apendix) Gobhila Parisista ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... ... | 0 | 10 |
| Haralāta ... ... ... ... ... ... | 1 | 14 |
| Karmapradiqh, Fasc. I ... ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 ... ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/- each ... ... | 17 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each | 6 | 14 |
| Mahā-bhāṣya-pradīpodyōta, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-10 @ /10/ each ... ... ... ... | 19 | 6 |
| Ditto Vol. IV, Fasc. I @ 1/4 ... ... ... | 1 | 4 |
| Manuṭīkā Sangraha, (Text) Fasc 1-3 @ /10/ each ... ... | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |
| *Mīmāṁsā Darcaṇa, (Text) Fasc. 10-19 @ /10/ each ... ... | 6 | 4 |

स वै पञ्चगृहीतं गृह्णीते। पञ्चधाविहितो वा ऽअयꣳ शीर्षन् प्राणो मनो वाक् प्राणश्चक्षुः श्रोत्र मेत मेवास्मिन्नेतत् पञ्चधाविहितꣳ शीर्षन् प्राणं दधात्यग्निस्तिग्मेन शोचिषेति तिग्मवत्या शिर ऽएवास्यैतया सꣳश्यति तिग्मतायै ॥ ५ ॥

अथ षोडशगृहीतं गृह्णीते। अष्टौ प्राणा ऽअष्टावङ्गान्येता मभि सम्पदꣳ समान्याꣳ स्रुचि गृह्णीते समाने ह्येवात्मन्नङ्गानि च प्राणाश्च भवन्ति नाना जुहोत्यङ्गेभ्यश्च तत्प्राणेभ्यश्च व्विधृतिं करोति व्वैश्वकर्म्मणाभ्यां जुहोति व्विश्वकर्म्मायमग्निस्त मेवैतत् संस्करोति तिस्र ऽआहुतिर्जुहोति त्रिवृदग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन संस्करोति सप्तदशभिर्ऋग्भिः सप्तदशः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् संस्करोत्येकविꣳशतिगृहीतेन द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएता मभिसम्पदम् ॥ ६ ॥

यद्द्वेवैताः समिध ऽआदधाति । एतद्वा ऽएनं देवाः सर्व्वं कृत्स्नꣳ संस्कृत्याथैन मेतेनान्नेनाप्रीणन्नेताभिः समिद्भिस्तथैवैन मय मेतत् सर्व्वं कृत्स्नꣳ संस्कृत्याथैन मेतेनान्नेन प्रीणात्येताभिः समिद्भिरौदुम्बर्यो भवन्त्यार्द्रा घृते न्युत्ता सर्व्वाꣳ रात्रिं व्वसन्ति तस्योक्तो बन्धुरुदेन मुत्तरां नयेन्द्रेमं प्रतरां नय यस्य कुर्म्मो गृहे हविरिति यथैव* यजुस्तथा बन्धुस्तिस्रः समिध ऽआदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति तिस्र ऽआहुतीर्जुहोति तत् षट् तस्योक्तो बन्धुः ॥ ७ ॥ १ ॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [२. २.]

प्रवर्ग्योद्वासनानन्तरं सञ्चिते इष्टकासमूहे स्थापनायाग्निं प्रणेतुं तावद्गार्हपत्ये आज्यहोमं समिद्धोमं च विधत्ते—"प्रत्येत्याग्नि मिति । प्रहरिष्यन् प्रणेष्यन्नित्यर्थः । विहित-

* 'यथा यजुस्तथा'—इति ग, घ ।

होम आहवनीयप्रदेशं समिद्धस्याग्नेः * प्रणनाय पुरस्तादनेन †
सम्पाद्यत इत्याह एतद्वा एन मित्यादिना आहुतिभिः
समिद्धिवेत्येतदनेनेत्यस्य विशेषणं आहुति समिद्रूपेण नेने-
त्यर्थः । आहुतिभि र्जुहोती सामान्येन विधानात् कथं
होमप्रकार इत्यपेक्षया माह – "स वै पञ्च गृहीत मिति ।
आज्यं पञ्चगृहीते यथा भवति तथा गृह्णीतेत्यर्थः । तस्य
तु "पञ्च वा ऋतव" ‡ इत्यादिकं ब्राह्मणं प्रागुक्तम् । अनेन
पञ्चगृहीतेनाज्येनैकाहुतिः सम्पाद्यते ॥ १ ॥

अथ षोड़शगृहीत माज्य गृह्णीते, अष्टौ प्राणा अष्टावङ्गा-
नीत्येतैः § षोडशावयवः प्रजापतिः अयं च ह्रयमाणोऽग्निः प्रजा-
पत्यात्मकः अतस्तस्य षोडशगृहीत मात्मसदृश मन्नं न भवतीति
तदुचितेनैवान्नेनैनं प्रीणाति । लोके हि यदेवान्न मात्मसंहितं
तदेव रक्षति न च हिनस्ति भूयो हिंसकत्वादल्पस्य त्वप-
र्याप्तत्वेनारक्षकत्वादिति । अत्र षोडश गृहीतं समं विभज्य द्वे
आहुती क्रियते । अतश्चाहुतिभेदेन पृथगेव ग्रहणप्रसक्तावाह,—
"समान्या मिति । समान्या मेकस्या मेव स्रुचि गृह्णीत-

---

* 'समिध्यातान्गेः'—इति क, 'गमिध्यतामेः'—इति ज,
'समिध्यातान्गेः'—इति भ, ञ ।

† 'पुरस्तादर्न्नेन'—इति क भ, ञ ।

‡ इहैव पुरस्तात् ८. ५. १ ।

§ 'अष्टावङ्गानीत्येतै'—इति क, 'अष्टावङ्गातीत्येतै'—इति ञ ।

षोडशगृहीत माज्यं सकृदेव गृह्णीयादित्यर्थः। आहुतिभेदेऽपि कथ मेकं गृह्णत इत्यत आह— "समानो होति। एतेन षोडशगृहीतेनाज्येन यं प्रीणाति तस्याग्नेरेकत्वादित्यर्थः। प्रकृतेन षोडशगृहीतेनाज्येन साध्यौ द्वौ होमाविति दर्शयत् मन्त्रे वर्णिता देवता सम्बन्धस्याग्नये प्रकृतहोमे समवेतार्थं माह— "वैश्वकर्मणाभ्या मिति। वैश्वकर्मणशब्द उद्भिदादि शब्दवत्कर्मनामधेयं अग्नेः प्राजापत्यात्मकत्वेन विश्व विषय-कर्मवत्वाद्विश्वकर्मत्वम्। पञ्चगृहीतेनाज्येनैकाहुतिः षोडश गृहीतेन द्वे आहुति इति। तिस्र आहुतयः सम्पद्यन्ते सा च त्रित्वसङ्ख्यासकलस्य अग्नेस्तृप्ति हेतु र्न भवतीत्याह,— "तिस्र आहुतो र्जुहोति त्रिवृदग्नि रिति। आहुतीश्च जुहोति समिधश्च दधातीति होमद्वय मपि सामान्येन विहितम्। तत्राज्याहुतीनां होमप्रकारोऽभिहितः॥ २ ॥

अथ समिधां होमे विशेष मभिधातु माह— "अथ समिध इति। यथा तर्पयस्वेति लोके जनः किञ्चित् पुरुष मन्येन तर्पयित्वा पश्चादन्नविशेषाणां परिवेषणं करोति तद्वदेवाय मपि समिद्धोमो भवति। आज्याहुतिलक्षणस्यान्नस्य प्रथमं सम्पा-दितत्वादित्यर्थः। परिवेविष्यादित्यविषे यङ्लुगन्तस्य लिङि रूपं ताश्च समिध औदुम्बर्यो भवेयु रित्याह— "औदुम्बर्य इति। उदुम्बरस्य उर्ग्रूपरसात्मकत्वात्तेनैवैनं प्रीणातीत्याह— "ऊर्ग्वा इति। एतद्वै वनस्पतीना मित्यादिकस्याय मर्थः। आर्द्राः

आर्द्रतराणा मुपजीवत्त्वात् ; अत आर्द्राभिः समिद्भि र्होमे तेन जीवेनैनं प्रीणाति। अग्नौ हूयमानस्य घृतस्य समिदादिवद् भस्मी भावात्। केवलं ज्वालारूपेण परिणामादाग्ने रयैधं अतएव श्रूयते। एतद्वा अग्नेः प्रियं धाम यदाज्य मिति (ताः समिधः पूर्वद्युरात्री सर्वस्या मेव घृते वसन्ति। सर्वां रात्रितीत्य-न्यस्यां योगे द्वितीया तत्तथा निवासे हि) * ताः रसेन सम्पन्ना भवन्तीति। अत स्तथाविधाभि समिद्भि र्होमे स्वकीयेन रसरूपेण तापनेन मग्नि प्रीणितवान् भवतीति। "समिध आदधातीति। सामान्येन बहुत्वविधाना त्तद्विशेषे पर्यवसान माह— "तिस्र इति। तासु त्रित्वसङ्ख्यां सकलाग्निप्रीतिहेतुत्वेन प्रशंसति ॥ ३ ॥

"यद्देवैता इति। समस्कुर्वन्निति आहवनीयरूपतानुगुण-संस्कार विशिष्ट मकुर्वन्नित्यर्थः ॥ ४ ॥

तत्र प्रथमाहुत्यर्थं पञ्चवार ग्रहणं अग्नेः शीर्षस्य प्राण-पञ्चको नमरूपेण प्रशंसति— "स वै पञ्च गृह्णीत मिति। वा-गिति वागिति मुखं प्राण इति प्राणं चक्षुर्द्वयं च द्वौ प्राणौ एते मनःसहितावागादयः शिरसि पञ्चविहिताः प्राणाः अतश्च पञ्चवार-ग्रहणेनास्मिन्नग्नेः शिरसि मनःप्रभृति प्राणपञ्चकं निदधाति। होममन्त्रस्य तिग्मपदसम्बन्धं प्रशंसति— अग्नेस्तिग्मेनेतिग्म-शब्दस्य तैक्ष्ण्यवाचकत्वात् तद्वत्या ऋचा होमेन तैक्ष्ण्यासिद्ध-येग्नेः शिरस्तीक्ष्णं करोति पश्यन्तीति शो तनूकरणे अस्मा-द्धटिश्यतिर्नुतः श्यतीत्योकारलोपः। अथ तत्राहुति द्वयार्थं

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो ज-पुस्तकमात्रे नास्ति।

षोडशवारग्रहणं प्रशंसति, ( प्रसिद्धान्यष्टावङ्गानि । एतासां सम्पदमभिलक्ष्य षोडशगृहीतस्य ग्रहणं अस्मिन्नग्नौ प्राणाङ्गा-ष्टकं सम्पादनार्थं षोडशवारं गृह्णीत इत्यर्थः। एकस्मिन्नेव शरीरे अङ्गानां प्राणानाञ्चावस्थानात् षोडशगृहीत मेवस्तु विगृह्णीते * ) होमन्तु पृथगेव करोति। एवं च अङ्गानां प्राणानाञ्च विधृतिं विभेदेन धारण मसङ्कीर्णतां करोति। तयो र्होमयो र्वैश्वकर्मणत्वाद्विश्वकर्मशब्दाभिधेय मग्निं संस्करोति। आहुतीनाञ्च त्रित्वात्त्रिवृतोऽग्नेः सकलस्यापि संस्कारं सम्पादयति। अत्राग्निस्तिग्मेनेत्यनया ऋचा पञ्चगृहीतं हूयते य इमा विश्वेत्यादिभिरष्टाभिर्ऋग्भिः षोडश गृहीतार्द्धं हूयते अवशिष्टं चक्षुषः पितेत्यादिभिरष्टाभि † हूयते। अतएव कात्यायनः ;— "पञ्च गृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा षोडशगृहीतार्द्ध मनुवाकशेषेण" "चक्षुषः पितेत्य परमनु वाकेना"—इति ‡। एवं सर्वाः सम्भूय सप्तदश भवन्ति ता एतान् सङ्ख्या कृत्स्नाग्निसंस्काराहेतुत्वेन प्रशंसति,— "सप्तदशभि ऋग्भिरिति। प्रजापतेः सप्तदशत्त्वं तैत्तिरीयके श्रुतम्,—"आश्रावयेति चतुरक्षर मस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः"—इति §।

---

* बन्धनीचिह्नान्तः प्रक्षिप्तः पाठो नास्ति ज-पुस्तकादन्यत्र।

† "पित्येत्यादिभिर्हूयते"—इति ज।

‡ का० श्रौ० सू० १८. ३. १२-१४।

§ तै० ब्रा १. ६. ११।

अथवा अष्टौ प्राणा अष्टावङ्गानि स्वय मेक इति सप्तदशात्मकः मिलितां ग्रहणसङ्ख्यां प्रशंसति,— "एकविंशति गृहीतेने ति। "द्वादश मासाः पञ्चर्त्तव स्त्रय इमे लोका असावादित्य एकविंश" एता मभिलक्ष्य एकविंशति गृहीतेन ह्रयते। एतस्याग्नेर्यथोक्तैकविंशात्मकत्व सम्पादनायैकविंशति गृहीतेन होम इत्यर्थः॥ ६ ॥

अथ समिधां होम प्रकारान्तरेण प्रशंसति,— "यद्वेवैता इति। ऊर्ध्वं यथा तर्पयित्वा परिवेष्यादिति आज्याहुतिलक्षणेनान्नेनं तर्पितस्याग्नेः समिद्धोमः परिवेषणवद्भवतीति प्रशंसितः। इदानीन्तु एकविंशति गृहीत होमेन एकविंशत्यात्मकत्व सम्पादनात् कार्त्स्न्येन संस्कृतस्याग्नेरन्नरूपेण प्रशस्यत इति न पौनरुक्त्यम्। सर्वमित्यस्यैवार्थं कथनं कृत्स्न मिति "औदुम्बर्यो भवन्त्यार्द्रा घृते न्युत्ता सर्वां रात्रिं वसन्ति"-इति यदस्ति तस्य ऊर्ग्वा उदुम्बर इत्यादिरूपं ब्राह्मण मनन्तर मेवोक्तं तदेवानुसन्धेयेत्यर्थः। प्रकृतानां समिदाहुतीनां मन्त्रा निगदव्याख्याता इत्याह—"उदेन मुत्तरान्नयेति *। "उदेन मुत्तरान्नयेत्यादिकः प्रथमो मन्त्रः, "इन्द्रेमं प्रतरान्नयेत्यादिको द्वितीयः † "यस्य कुर्मो गृहे हविरित्यादिक स्तृतीयः ‡, एतेषां यथा मन्त्रस्य तथैव ब्राह्मणं स्पष्टार्थां इत्यर्थः। "तिस्रः समिध" इत्येत-

---

* वा० सं० १७. ५० ।

† वा० सं० १७. ५१ ।

‡ वा० सं० १७. ५२ ।

दृष्टार्थं आज्यसमिदाहुति सङ्ख्यां भूयः स्तौति— "तिस्र आहुति रिति । प्रकृतत्वात्तिस्रः समिध आदधातीति सम्बध्यते, एवं षट् सङ्ख्यां सम्पद्यन्ते तद्ब्राह्मणं-"षड् वा ऋतव" इत्यादि-रूपं प्रागुक्त मित्यर्थः * ॥ ७ ॥ ३ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥

॥ इति नवमकाण्डे प्रथमः प्रपाठकः समाप्तः ॥

---

* पुरस्तात् ८. ५. १ ।

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ,

अपि वा

द्वितीयाध्याये तृतीयं ब्राह्मणम् ।

---

॥ हरिः ॐ ॥

अथातः सम्प्रैष्यति । उद्यच्छेध्ममुपयच्छोपयमनीरग्नये प्रक्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूद्देहि* ब्रह्मन्नप्रतिरथं जपेति ॥ १ ॥

एतद्वै देवानुपप्रैष्यतः । एतं यज्ञं तꣳस्यमानान् दक्षिणतोऽसुरा रक्षाꣳसि नाष्ट्रा अजिघाꣳसन्न यक्ष्यध्वे न यज्ञं तꣳस्यध्व इति ॥ २ ॥

ते देवा इन्द्र मब्रुवन् । त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यवत्तमोऽसि त्व मिमानि रक्षाꣳसि प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीय मस्त्विति

---

* '०स्फ्ययानुद्देहि'—इति क, ख, ङ ।

तथेति तस्मै वै बृहस्पतिं द्वितीय मकुर्व्वन् ब्रह्म वै बृहस्पतिस्त ऽइन्द्रेण चैव बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाᳬंसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएतं यज्ञ मतन्वत ॥ ३ ॥

तद्वा ऽएतत् क्रियते। यद्देवा अकुर्व्वन्निदं नु तानि रक्षाᳬंसि देवैरेवापहतानि यत्त्वेतत् करोति यद्देवा ऽअकुर्व्वंस्तत्करवाणीत्यथो ऽइन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाᳬंसि नाष्ट्रा ऽअपहत्याभये ऽनाष्ट्र ऽएतं यज्ञं तनुते ॥ ४ ॥

स यः स इन्द्रः। एष सो ऽप्रतिरथो ऽथ यः स बृहस्पतिरेष स ब्रह्मा तद्यद्ब्रह्मा प्रतिरथं जपतीन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाᳬंसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएतं यज्ञं तनुते॥ तस्माद् ब्रह्माप्रतिरथं जपति * ॥ ५ ॥

आशुः शिशानो वृषभो न भीम इति† । ऐन्द्र्यो ऽभिरूपा द्वादश भवन्ति द्वादश मासाः

* 'जपति'—इति ङ।  † 'इति'—इति क, ख।

संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्दक्षिणतो ऽसुरान् रक्षाᳩसि नाष्ट्रा अपहन्ति त्रिष्टुब्भिर्व्वज्रो * वै त्रिष्टुब्वज्रेणैवैतद्दक्षिणतो ऽसुरान् रक्षाᳩसि नाष्ट्रा अपहन्ति ता द्वाविᳩशतिर्गायत्र्यः सम्पद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म्म हि † ॥ ६ ॥

अथैन मुद्यच्छति ‡ । उदु त्वा व्विश्वे देवा अग्ने भरन्तु चित्तिभिरिति तस्योक्तो बन्धुः § ॥ ७ ॥

अथाभिप्रयन्ति । पञ्च दिशो दैवीर्य्यज्ञ मवन्तु देवीरिति देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्द्धन्त ते देवा असुराणां दिशो ऽवृञ्जत तथैवैतद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते दैवीरिति तदेना दैवीः कुरुते ‖ यज्ञ मवन्तु दैवी-

---

* 'त्रिष्टुभिर्व्वज्रो'—इति क ख ।

† 'हि'—इति क, 'हि'—इति ग, घ ।

‡ 'मुद्यच्छति'—इति क ।

§ 'बन्धुः'—इति ङ ।

‖ 'कुरुते'—इति ग ।

रिति यज्ञ मिम मवन्तु देवीरित्येतदपामतिं दुर्म्मतिं बाधमाना इत्यशनाया वा ऽअमतिरशनाया मपबाधमाना इत्येतद्रायस्पोषे यज्ञपति माभजन्तीरिति रय्यां च पोषे च यज्ञपति माभजन्तीरित्येतद्रायस्पोषे ऽअधि यज्ञो ऽअस्थादिति रय्यां च पोषे चाधि यज्ञो ऽस्थादित्येतत् * ॥ ८ ॥

समिद्धे ऽअग्नावधि मामहान इति। यजमानो वै मामहान उक्थपत्र इत्युक्थानि ह्येतस्य पत्राणीड्य इति यज्ञियं इत्येतद्गृभीत इति धारित इत्येतत्तप्तं घर्म्मं परिगृह्यायजन्तेति तप्तं ह्येतं घर्म्मं परिगृह्यायजन्तोर्जा यद्यज्ञ मयजन्त देवा इत्यूर्ज्जा ह्येतं यज्ञ मयजन्त देवाः † ॥ ९ ॥

दैव्याय धर्त्रे जोष्ट्र ऽइति। दैवो ह्येष धर्त्ता जोषयितृतमो देवश्रीः श्रीमनाः शतपया इति देवश्रीर्ह्येष श्रीमनाः शतपयाः परिगृह्य देवा यज्ञ मायन्निति परिगृह्य ह्येतं देवा यज्ञ मायन् देवा

* 'ऽस्थादित्येतत्'—इति ग, घ।

† 'देवाः'—इति ग, घ।

देवेभ्योऽध्वर्य्यन्तो अस्युरित्यध्वरो वै यज्ञो देवा देवेभ्यो यज्ञियन्तोऽस्युरित्येतत् ॥ १० ॥

वीतᳪ हविः शमितᳪ शमिता यजध्या ऽइति । इष्टᳪ स्विष्ट मित्येतत्तुरीयो यज्ञो यत्र हव्यमेतीत्यध्वर्युः पुरस्ताद्यजूᳪषि जपति होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष ऽएव तुरीयो यज्ञस्ततो व्वाका आशिषो नो जुषन्तामिति ततो नो व्वाकाश्चाशिषश्च जुषन्ता मित्येतत् * ॥ ११ ॥

सूर्य्यरश्मिर्हरिकेशः पुरस्तात् । सविता ज्योतिरुदयां† अजस्र मित्यसौ वा ऽआदित्य एषोऽग्निः स ऽएष सूर्य्यरश्मिर्हरिकेशः पुरस्तात् सवितैतज्ज्योतिरुद्यच्छत्यजस्रं तस्य पूषा प्रसवे याति व्विद्वानिति पशवो वै पूषा त ऽएतस्य प्रसवे प्रेरते सम्पश्यन् विश्वा भुवनानि गोपा इत्येष वा ऽइदᳪ

---

* 'मित्येतत्'—इति ग, घ ।

† 'ज्योतिरुदयां२॥'—इति क, 'ज्योतिरुदयां३'— ति ख, 'ज्योतिरुदयां१॥'—इति ङ ।

सर्व्वꣳ सम्प्रख्यात्येष ऽउ ऽएवास्य सर्व्वस्य भुवनस्य गोप्ता * ॥ १२ ॥

तद्या अमुष्मादादित्यादर्व्वाच्यः पञ्च दिशः । ता ऽएतद्देवा ऽअसुराणां मद्दत्रुतायो ता ऽएवैतत् समारोहंस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत् समारोहत्यथो ऽएतद्दा ऽएताभिर्देवा आतः सम्प्राप्नुवंस्तथैवाभिरय मेतदातः सम्प्राप्नोति † ॥ १३ ॥

अथाश्मानं पृश्नि मुपदधाति । असौ वा ऽआदित्यो ऽश्मा पृश्निरमु मेवैतदादित्य मुपदधाति पृश्निर्भवति रश्मिभिर्हि मण्डलं पृश्नि त मन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय ऽएतं तदिमौ लोकावन्तरेण दधाति ‡ तस्मादेष ऽइमौ लोकावन्तरेण तपति ॥ १४ ॥

---

* 'गोप्ता'—इति ग, 'गोप्ता'—इति घ ।

† 'सम्प्राप्नोति'—इति क ।

‡ 'दधाति'- इति क ।

आग्नीध्रवेलायाम्। अन्तरिक्षं वा ऽआग्नीध्र मेतं तदन्तरिक्षे दधाति तस्मादेषो ऽन्तरिक्षाय-तनो व्यध्वे व्यध्वे ह्येष इतः * ॥ १५ ॥

स एष प्राणः। प्राण मेवैतदात्मन् धत्ते तदे-तदायुरायुरेवैतदात्मन् धत्ते तदेतदन्न मायुर्ह्येतदन्न मु वा ऽआयुरश्मा भवति स्थिरो वा ऽअश्मा स्थिरं तदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्नम् ॥ १६ ॥

स उपदधाति। विमान एष दिवो मध्य ऽआस्त ऽइति विमानो ह्येष दिवो मध्य ऽआस्त ऽआपप्रिवान्रोदसी अन्तरिक्ष मित्युद्यन् वा ऽएष ऽइमांल्लोकानापूरयति स विश्वाचीरभिचष्टे घृताची रिति स्रुचश्चैतद्वेदीश्चाहान्तरा पूर्व्व मपरं च केतु मित्य-न्तरेमञ्च लोक ममु ञ्चेत्येतदयो यच्चेद मेतर्हि चीयते यच्चादः पूर्व्वं मचीयतेति ॥ १७ ॥

उक्षा समुद्रो ऽअरुणः सुपर्ण ऽइति। उक्षा ह्येष समुद्रो ऽरुणः सुपर्णः पूर्व्वस्य योनिं पितुरा-विवेशेति पूर्व्वस्य ह्येष एतं योनिं पितुराविशति

* 'इतः'—इति ग, घ।

मध्ये दिशो निहितः पृश्निरश्मेति मध्ये ह्येष दिवो निहितः पृश्निरश्मा व्विचक्रमे रजसस्पात्यन्ताविति व्विक्रममाणो वा ऽएष ऽएषां लोकाना मन्ता-न्याति ॥ १८ ॥

द्वाभ्या मुपदधाति । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदुप-दधाति त्रिष्टुब्भ्यां* त्रैष्टुभो ह्येष न सादयत्यसन्नो ह्येष न सूददोहसाधिवदति प्राणो वै सूददोहाः ऽप्राण ऽएष किं प्राणे प्राणं दध्यामिति तं निधाय यथा न नश्येत् ॥ १९ ॥

अथोपायन्ति† । इन्द्रं व्विश्वा ऽअवीवृधन्निति तस्योक्तो बन्धुर्देवहूर्यज्ञ आ च व्वक्षत्सुम्नहूर्यज्ञ ऽआ च व्वक्षदिति देवहूश्चैव यज्ञः सुम्नहूश्च यज्ञदग्निर्देवो देवांश्॥ ऽआ च व्वक्षदिति यज्ञश्चैवाग्निर्देवो देवाना च वहत्वित्येतत् ॥ २० ॥

---

* 'त्रिष्टुभ्भ्यां'—इति क, ख, ङ ।

† 'अथोपातियन्ति'—इति क, ख, ङ ।

‡ 'वहत्वित्येतत्'—इति ग, घ ।

व्वाजस्य मा प्रसवः । उद्ग्राभेणोदग्रभीत् अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ२॥ ऽअकरिति यथैव यजुस्तथा बन्धुः ॥ २१ ॥

उद्ग्राभं च निग्राभं च । ब्रह्म देवा अवी-वृधन् अधा सपत्नानिन्द्राग्नी मे व्विषूचीनान् व्यस्यता मिति यथैव यजुस्तथा बन्धुः ॥ २२ ॥

तद्या अमुष्मादादित्यादूर्द्ध्वाश्चतस्रो दिशः । ता एतद्देवा असुराणा मवृञ्जताथो ता एवैतत् समारोहंस्ता उ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य व्वृङ्क्तेऽथो ता एवैतत् समारोहत्यथो ऽएतद्वा ऽएता-भिर्देवा आतः सम्प्राप्नुवंस्तथैवाभिरय मेतदातः सम्प्राप्नोति * ॥ २३ ॥

अथाग्नि मारोहन्ति । क्रमध्व मग्निना नाक मिति स्वर्गो वै लोको नाकः क्रमध्व मनेनाग्नि-नैतᳫँ स्वर्गं लोक मित्येतदुख्यᳫँ हस्तेषु बिभ्रत

* 'संप्राप्नोति'--इति ख ।

इत्युख्यᳪ ह्येत ऽएतᳪ हस्तेषु बिभर्ति दिवस्पृष्ठᳪ स्वर्गत्वा मिश्रा देवेभिराध्व मिति दिवस्पृष्ठᳪ स्वर्गं लोकं गत्वा मिश्रा देवेभिराध्व मित्येतत्* ॥ ॥ २४ ॥

प्राची मनु प्रदिशं प्रेहि विद्वानिति। प्राची वै दिगग्नेः स्वा मनु प्रदिशं प्रेहि विद्वानित्येतदग्ने रग्ने पुरो ऽअग्निर्भवेहेत्यस्य त्व मग्नेरग्ने पुरो ऽग्नि† र्भवेहेत्येतद्विश्वा आशा दीद्यानो विभाहीति सर्व्वा आशा दीप्यमानो विभाहीत्येतदूर्ज्जं नो धेहि द्विपदे चतुष्पद ऽइत्याशिष माशास्ते ॥ २५ ॥

पृथिव्या ऽअहम्‡। उदन्तरिक्ष मारुह मन्तरिक्षा-द्दिव मारुह मिति गार्हपत्याद्ध्याग्नीध्रीय मागच्छ-त्याग्नीध्रीयादाहवनीयं दिवो नाकस्य पृष्ठात्स्वर्ज्योति-

* 'मित्येतत'—इति ग, घ।

† 'पुरो अग्नि'—इति क, 'पुरोग्नि'—इति ख, घ।

‡ 'पृथिव्याहम्'—इति क, पृथिव्या ऽअहम्'—इति ख, ङ, 'पृथिव्या अहम्'—इति ग।

रगामह मिति दिवो नाकस्य पृष्ठात्स्वर्गं लोक-मगामह मित्येतत् * ॥ २६ ॥

स्वर्यन्तो नापेक्षन्ते। आ द्याꣳ रोहन्ति रोदसी ऽइति न हैव ते ऽपेक्षन्ते ये स्वर्गं लोकं यन्ति यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिर ऽइत्येष एव यज्ञो विश्वतोधार एत ऽउ ऽएव सु-विद्वाꣳसो य ऽएतं वितन्वते † ॥ २७ ॥

अग्ने प्रेहि प्रथमो देवयता मिति। इम मेतदग्नि माह त्व मेषां प्रेहि प्रथमो देवयता मिति चक्षुर्देवाना मुत मर्त्याना मित्युभयेषाꣳ हैतद्देव-मनुष्याणां चक्षुरियक्षमाणा भृगुभिः सजोषा इति यजमाना भृगुभिः सजोषा इत्येतत्स्वर्य्यन्तु यजमानाः स्वस्तीति स्वर्गं लोकं यन्तु यजमानाः स्वस्तीत्येतत् ‡ ॥ ॥ २८ ॥

तद्या अमुष्मिंल्लोके पञ्च दिशः। ता एतद्देवा

---

* 'मित्येतत्'—इति ग, 'मित्येतत्'—इति घ।

† 'वितन्वते'—इति ग, 'वितन्वते'—इति घ।

‡ 'स्वस्तीत्येतत्'—इति ग, घ।

ऽअसुराणा मवृञ्जताथो ता एवैतत् समारोहंस्ता उ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्ते ऽथो ता एवैतत् समारोहत्यथो ऽएतद्वा ऽएताभिर्द्देवा आतः सम्प्राप्नुवंस्तथैवाभिरय मेतदातः सम्प्राप्नोति* ॥ २९ ॥

अथैन मभिजुहोति। एतद्वा ऽएनं देवा ईयिवाꣳस मुपरिष्टादन्नेनाप्रीणन्नेतयाहुत्या तथैवैन मय मेतदीयिवाꣳस मुपरिष्टादन्नेन प्रीणात्येतयाहुत्या कृष्णायै शुक्लवत्सायै पयसा रात्रिर्व्वै कृष्णा शुक्लवत्सा तस्या असावादित्यो वत्सः स्वेनैवेन मेतद् भागेन स्वेन रसेन प्रीणात्युपरि धार्य्यमाण उपरि धार्य्यमाण उपरि हि स य मेतत् प्रीणाति दोहनेन हि पयः प्रदीयते ॥ ३० ॥

यद्वेवैन मभिजुहोति। शिर एतद्यज्ञस्य यदग्निः प्राणः पयः शीर्षंस्तत् प्राणं दधाति यथा स्वयमातृण्णा मभिप्रचरेदेव मभिजुहुयात् प्राणः स्वयमातृण्णा रस एष शिरश्च तत् प्राणञ्च रसेन सन्तनोति

---

* 'सम्प्राप्नोति'—इति ख।

सन्दधाति नक्तोषासा समनसा व्विरूपे ऽइति तस्योक्तो बन्धुः ॥ ३१ ॥

अग्ने सहस्राक्षेति। हिरण्यशकलैर्व्वा ऽएष सहस्राक्षः शत मूर्द्धन्निति यदाह शतशीर्षा रुद्रो ऽसृज्यत शतं ते प्राणाः सहस्रं व्याना इति शतᳪ हैव तस्य प्राणाः सहस्रं व्याना यः शतशीर्षा त्वᳪ साहस्रस्य राय ऽईशिषऽ इति त्वᳪ सर्व्वस्यै रय्या ऽईशिष ऽइत्येतत्तस्मै ते व्विधेम व्वाजाय स्वाहेत्येष वै व्वाजस्त मेतत् प्रीणाति ॥ ३२ ॥

द्वाभ्या मभिजुहोति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदभिजुहोति * ॥ ३३ ॥

अथैनं निदधाति। सुपर्णोऽसि गरुत्मानित्येतद्वा ऽएन मदो व्विकृत्या सुपर्णं गरुत्मन्तं व्विकरोति तᳪ सुपर्णं गरुत्मन्तं चिनोति तᳪ सुपर्णं गरुत्मन्तं कृत्वान्ततो निदधाति पृष्ठे पृथिव्याः

* 'मेतदभिजुहोति'—इति ख।

सीद भासान्तरिक्ष मापृण ज्योतिषा दिव मुत्तभान तेजसा दिश उद्दृ०ँहेत्येव०ँ ह्येष एतत् सर्व्वं करोति*॥ ॥ ३४ ॥

आजुह्वानः सुप्रतीकः पुरस्तादिति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येतदग्ने त्वं योनि मासीद साधुयेत्येष वा ऽअस्य स्वो योनिस्त०ँ साध्वासीदेत्येतदस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्निति द्यौर्व्वा ऽउत्तर०ँ सधस्थं व्विश्वे देवा यजमानश्च सीदतेति तद्विश्वैर्द्देवैः सह यजमान०ँ सादयति द्वाभ्यां निदधाति तस्योक्तो बन्धुर्व्वषट्कारेण तस्योपरि बन्धुः ॥ ३५ ॥

अथास्मिन्त्समिध आदधाति । एतद्वा ऽएनं देवा ईयिवा०ँस मुपरिष्टादन्नेनाप्रीणन्त्समिद्भिश्चाहुतिभिश्च तथैवैन मय मेतदीयिवा०ँ समुपरिष्टादन्नेन प्रीणाति समिद्भिश्चाहुतिभिश्च †॥ ३६ ॥

---

* 'करोति'—इति क ।

† 'श्वाहुतिभिश्च'—इति क, घ ।

स वै शमीमयीं प्रथमा मादधाति। एतद्वा ऽएष एतस्या माहुत्याᳬ हुतायां प्रादीप्यतोदज्वलत् तस्माद्देवा अबिभयुर्यद्वै नो ऽयं न हिᳬस्यादिति त ऽएताᳬ शमी मपश्यंस्तयैन मशमयंस्तद्यदेतᳬ शम्या-शमयंस्तस्माच्छमी तथैवैन मय मेतच्छम्या शमयति शान्त्या ऽएव न जग्ध्यै ॥ ३७ ॥

ताᳬ सवितुर्व्वरेण्यस्य। चित्रा माहं व्वृणे सुमतिं व्विश्वजन्याम् या मस्य कण्वो ऽअदुहत् प्रपीनाᳬ सहस्रधारां पयसा महीं गा मिति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्व्वान् कामान् दुदुहे तथैवैतद्यजमानाय सहस्रधारा सर्व्वान् कामान् दुदुहे * ॥ ३८ ॥

अथ व्वैकङ्कती मादधाति। तस्या उक्तो बन्धु-र्व्विधेम ते परमे जन्मन्नग्न ऽइति द्यौर्व्वा ऽअस्य परमं जन्म व्विधेम स्तोमैरवरे सधस्थ इत्यन्तरिक्षं व्वा ऽअवरᳬ सधस्थं यस्माद्योनेरुदारिथा यजे त

* 'दुदुहे'--इति क ।

मित्येष वा ऽअस्य स्वो योनिस्तं यज ऽइत्येतत्स* स्वे हवी ँषि जुहुरे समिद्ध ऽइति यदा वा ऽएष समिध्यते ऽथैतस्मिन् हवी ँषि प्रजुह्वति ॥ ३९ ॥

अथौदुम्बरी मादधाति। ऊर्ग्वै रस उदुम्बर ऊर्ज्जैवैन मेतद्रसेन प्रीणाति कर्ष्णकवती भवति पशवो वै कर्ष्णकाः पशुभिरेवैन मेतदन्नेन प्रीणाति यदि कर्ष्णकवतीं न विन्देद्दधिद्रप्स मुपहत्यादध्या-त्पयद्दधिद्रप्स उपतिष्ठते तदेव पशुरूपं प्रेद्धो ऽअग्ने दीदिहि पुरो न इति विराजादधात्यन्नं विरा-डन्नेनैवैन मेतत् प्रीणाति तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेत-दन्नेन प्रीणाति † ॥ ४० ॥

अथाहुतीर्जुहोति। यथा परिविष्यानुपाययेत् ता हक्तत् स्रुवेण पूर्व्वं स्रचोत्तरा मग्ने त मद्याश्वं न स्तोमैः क्रतुं न भद्र ँ हृदिस्पृशम् ऋध्यामा त

* 'ऽइत्येतत्स'—इति ग, घ।

† 'प्रीणाति'- इति क।

ऽओहैरिति यस्ते हृदिस्पृक्स्तोमस्तं त ऽऋध्यास-मित्येतत् पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्च-चितिको ऽग्निः पञ्च ऽर्त्तवः संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति * ॥ ४१ ॥

अथ व्वैश्वकर्म्मणीं जुहोति । व्विश्वकर्म्माय मग्निस्त मेवैतत् प्रीणाति चित्तिं जुहोमि मनसा घृतेनेति चित्त मेषां जुहोमि मनसा च घृतेन चेत्येतद्यथा देवा इहागमन्निति यथा देवा इहा-गच्छानित्येतद्वीतिहोत्रा ऋतावृध ऽइति सत्यवृध ऽइत्येतत्पत्ये व्विश्वस्य भूमनो जुहोमि व्विश्व-कर्म्मण ऽइति योऽस्य सर्व्वस्य भूतस्य पतिस्तस्मै जुहोमि व्विश्वकर्म्मण ऽइत्येतद्विश्वाहादाभ्यꣳ हवि-रिति सर्व्वदैवाच्छितꣳ हविरित्येतत् † ॥ ४२ ॥

---

* 'प्रीणाति'- इति ख ।

† 'हविरित्येतत्'—इति ग, 'हविरित्येतत्'- इति घ ।

अथ पूर्णाहुतिं जुहोति। सर्व्वं मेतद्यत् पूर्णᳪ सर्व्वेणैवेन मेतत् प्रीणाति ॥ ४३ ॥

सप्त ते ऽअग्ने समिध इति। प्राणा वै समिधः प्राणा ह्येतᳪ समिन्धते सप्त जिह्वा ऽइति यान-मूंस्तान्सप्त पुरुषानेकं पुरुष मकुर्व्वंस्तेषा मेतदाह सप्त ऽऋषय इति सप्त हि त ऽऋषय आसन्त्सप्त धाम प्रियाणीति छन्दाᳪस्येतदाह छन्दाᳪसि वा ऽअस्य सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्तीति सप्त ह्येतᳪ होत्राः सप्तधा यजन्ति सप्त योनीरिति चितीरेतदाहापृणस्वेत्या* प्रजायस्वे-त्येतद्घृतेनेति रेतो वै घृतᳪ रेत ऽएवैतदेषु लोकेषु दधाति स्वाहेति यज्ञो वै स्वाहाकारो यज्ञिय मेवैतदिदᳪ सकृत् सर्व्वं करोति ॥ ४४ ॥

सप्त सप्तेति। सप्तचितिकोऽग्निः सप्त ऽर्त्तवः संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवेन मेतत् प्रीणाति तिस्र आहुतीर्जुहोति

* 'चितीरेतदाहापृणस्वेया' —इति ख।

त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति तिस्रः समिध ऽआदधाति तत् षट् तस्योक्तो बन्धुः ॥ ४५ ॥

तिष्ठन्त्समिध ऽआदधाति*। अस्थीनि वै समिधस्तिष्ठन्तीव वा ऽअस्थीन्यासीन आहुतीर्जुहोति माꣳसानि वा ऽआहुतय ऽआसत ऽइव वै माꣳसान्यन्तराः समिधो भवन्ति बाह्या ऽआहुतयो ऽन्तराणि ह्यस्थीनि बाह्यानि माꣳसानि† ॥ ४६ ॥

अथातः सम्पदेव‡। षट् पुरस्ताज्जुहोति षडुपरिष्टात् षड्भिराश्मनः पृश्नेर्य्यन्ति द्वाभ्या मश्मानं पृश्नि मुपदधाति चतुर्भिराग्नेर्य्यन्ति पञ्चभिरग्निमारोहन्ति तदेका न्न त्रिꣳशदाहुतिरेव त्रिꣳशत्तमी द्वाभ्या मग्निं निदधाति तद् द्वात्रिꣳशद् द्वात्रिꣳशदक्षरानुष्टुप्सैषानुष्टुप्§ ॥ ४७ ॥

---

* 'ऽआदधाति'—इति ख ।

† 'माꣳसानि'—इति ग, माꣳसानि—इति ख, ङ,

‡ 'सम्पदेव'—इति ग, घ ।

§ '०सैषानुष्टप्'—इति ग, '०सैषानुष्टुप्'—इति घ ।

तद्या ऽअमूस्तिस्रो ऽनुष्टुभः । गार्हपत्ये सम्पादयन्ति तासा मेता मचैका माहरन्ति तद्यदेता मत्राहरन्त्यत्रैष सर्व्वो ऽग्निः संस्कृतः स ऽएषोऽत्र तस्मै नाल मासीद्यदन्न मात्स्यत ✻ ॥ ४८ ॥

सो ऽग्नि मब्रवीत् । त्वयान्न मदानीति तथेति तस्माद्यदेवैत मत्राहरन्त्यथैषो ऽल मन्नायाल माहुतिभ्यो भवति † ॥ ४९ ॥

अथो ऽआहुः । प्रजापतिरेवैतं प्रियं पुत्र मुरस्याधत्त ऽइति स यो हैतदेवं व्वेदा हैवं प्रियं पुत्र मुरसि धत्ते ॥ ५० ॥

यद्वेवैत मत्राहरन्ति । यान्वै तान्त्सप्त पुरुषानेकं पुरुष मकुर्व्वन्नय मेव स यो ऽय मग्निश्चीयते ऽथ या मेषां ता मूर्द्धाॅ श्रियॅ रसॅ समुदौहन्नेष स य मेत मत्राग्नि माहरन्ति तद्यदेत मत्राहरन्ति यैवैतेषाॅ सप्तानां पुरुषाणाॅ श्रीर्यो रसस्त मेत-

---

✻ 'मात्स्यत्'—इति ग, 'मात्स्यन्'—इति घ ।

† 'भवति'—इति क ।

दूर्ह्वँ स मुदूहन्ति तदस्यैतच्छिर ऽआत्माय मग्नि-श्चित ऽआत्मान मेवास्यैतत् संस्कृत्य शिरः प्रति-दधाति ॥ ५१ ॥ २ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२. ३.] ॥

इत्थ मग्निप्रणयनार्थं यथोक्तं होमं विधायाथ तत् प्रयो-गौपायिकीः (?) * क्रियाः कर्त्तुं तदुचितं सम्प्रैष माह,—"अथातः सम्प्रेष्यतीति। प्रणेष्यमाणाग्नि मिध्यर्थं गार्हपत्ये प्रक्षिप्तं काष्ठमिध्मस्तदुद्यच्छ † अग्निधारणार्थं मधस्तात् क्रिय-माणाः सिकता उपयमन्यः ताश्चोपयच्छेति ‡ एतदुभयं प्रति-प्रस्थातारम् प्रत्युच्यते। हे होतः प्रणीयमानायाग्नये अनु-ब्रूहि अग्निप्रणयनीया ऋचोऽनुब्रूहि। हे अग्नीत् पराच्यास्फ्य-रेखया § अनुगच्छ ‖। हे ब्रह्मन् 'आशुः शिशान' इत्येतद-

* 'तस्मायाणोपयिकीः'—इति क, 'तत्रायणौपयिकीः'—इति ञ, भ, 'तत्मायाणोपयिकीः'—इति ञ।

† 'काष्ठमिकातंद्दुद्यच्छ'—इति क, 'वाष्टमिकातंदुद्यच्छ'—इति भ, 'पश्चिदां वाष्टमिकां तदुद्यच्छ—इति ञ।

‡ 'ताश्चोपयच्छताः कुरुत'—इति ज-पुस्तके।

§ 'यच्यंराया (एकरूफ्यया ?')—इति क, भ।

‖ का० श्रौ० सू० १८. ३. १६।

प्रतिरथाख्यं सूक्तं * जपेति एवं तत्र तत्र व्यापारे तं तं 'सम्प्रेष्यति' विनियुञ्ज्यादित्यर्थः । अत्र सम्प्रैष "ब्रह्मन् प्रतिरथम् जपेति" यदुक्तं तस्योपयोग मभिधातुं सुराकल्प मवतारयति ॥ १ ॥

"एतद्वा इति । एतस्मिन् काले खलु एत मग्निं चय-माख्यं यज्ञं तऽऽस्यमानान् करिष्यमानान् इडभावस्थादयः (?) अतएवाग्निविहारसमीपे गच्छतो देवान् दक्षिणभागेन एका 'असुरा रक्षांसि'त्वेन लोडार्थव्यत्ययेन लट्-प्रत्ययः । 'न यजध्वं' न विस्तारयध्व मिति । हन्तु मैच्छन् देवानां यज्ञं विहन्तु मि च्छन्नित्यर्थः ॥ २ ॥

पश्चात्तैर्देवै रस्माकं मध्ये त्वमेव प्रशस्ततमो बलवत्तमश्च बलिष्ठश्च वीर्यवत्तम इति । अतस्त्वमिमानि रक्षांसि प्रति-पन्नं कुरुष्वेत्युक्ते इन्द्रेण मे ब्राह्मणो द्वितीयोऽस्त्वित्युक्ते तथैव कुर्म इति । बृहस्पतिर्ब्राह्मणस्त्वात्तमिन्द्रस्य द्वितीय मकुर्वन् ; तथा कृत्वा ते देवा इन्द्रेण बृहस्पतिना च दक्षिणतो दक्षिण-भागे नाशकानसुरारक्षांसि चापहत्य अनाष्ट्रे अतएवाभये प्रदेशे एनं प्रकृतं यज्ञ मकुर्वत ॥ ३ ॥

"तद्वा एतद्" इत्यादिकस्याय मर्थः,— देवाः पूर्वं यत् कर्माकुर्वन् एतस्मिन् कालेऽपि तदेव क्रियते खलु इद मिति । अपहननक्रियाविशेषणं इदं रक्षसा मवहनन पूर्वं

---

* वा० सं० १७. ३३—४४ ।

देवैरेव सम्पादितं तस्माच्चरितार्थत्वादेतत् कर्म यद्यपि न करणीयं तथापि यदेतत् कर्म करोतीति तद्देवा यद-कुर्वन् करवाणीति धिया क्रियते न तु रक्षसा मपहननार्थं तस्य तु देवैरेव सम्पादितत्वात् किञ्च स्वय मपि चैतेन इन्द्रेण बृहस्पतिना च दक्षिणभागस्थितान्नाशकानसुरान् रक्षांसि चापहत्या नाष्ट्रे ऽभये देशे एनं यज्ञं कृतवान् भवतीति। ननु देवाः पूर्वं इन्द्रबृहस्पतिभ्यां रक्षांस्यघ्नन्नित्ये तदस्तु प्रकृते क इन्द्रः को वा बृहस्पतिः कथं वा ताभ्यां रक्षसा मपहननं यत उक्त मुपपद्यत इत्याह ॥ ४ ॥

"स यः स इति। पूर्वं दक्षिणभागे रक्षांस्यपहतानिन्द्रः परा-मृश्यते। स य इन्द्रोऽस्ति स एष अप्रतिरथस्त्व इत्यर्थः ॥ ५ ॥

अप्रतिरथ मैन्द्रात्मकत्वमुपपादयति — "आशुः शिशान* इति। (मन्त्रप्रतिपाद्याया देवताया मन्त्रस्य वा भेदात् आशुः शिशान इत्यादिका ऐन्द्रं ऋचोभिरूपाः सदृशा भवन्तीति इन्द्रत्वेन स्वीकर्त्तु मुचिता भवन्तीति अर्थः। अप्रतिरथसूक्त-स्थाना मृचां द्वादश सङ्ख्याया कृत्स्नाग्नेः सकाशादसुरा रक्षांसि चापहन्यन्त इति प्रशंसति। † ) "द्वादश भवन्तीति। तासां छन्दः प्रशंसति — "त्रिष्टुब्भि रिति। त्रिष्टुभा वज्रत्वं वज्रि-णेन्द्रेण सहोत्पत्तेः सा चोत्पत्ति स्तैत्तिरीयके श्रूयते— "उरसो बाहुभ्यां पञ्चदशं निरमिमीत मिन्द्रो देवतान्व सृज्यत्तत्

* वा० सं० १७. ३३।

† बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति अ-पुस्तकादन्यत्र।

त्रिष्टुप्छन्दः इति। अथवा वीर्यवत्वात्त्रिष्टुभो वज्रत्वं वीर्यवत उरः प्रदेशतो निर्माणात्। अतएव श्रुतं,— त्रिष्टुप् छन्दो बृहत्साम राजन्यो मनुष्याणा मविः पशूनां यस्मात्ते वीर्यवन्तो वीर्याद्ध्यसृजन्तेति। ननु प्रकृतस्याग्निकर्मत्वात् तत्रैतासामैन्द्रीणा मृचा मसमवेतार्थं त्वंस्यादित्यत आह,— "ता द्वाविंशति रिति। चतुश्चत्वारिंशदक्षरा द्वादश त्रिष्टुभः सम्भूयाष्टाविंशतिपञ्चशताक्षराणि सम्पद्यन्ते चतुर्विंशत्यक्षराणां गायत्रीणां द्वाविंशतिस्तावदक्षरा भवन्ति। अतो द्वादश त्रिष्टुभो मिलित्वा द्वाविंशति गायत्र्यश्चाग्नेय्यो * भवन्ति अग्निना सहोत्पन्नत्वात्। अतएव श्रूयते,— "समुश्च तत्त्रिवृतन्निरमिमीत त मग्निर्देवता च सृज्यत् गायत्रीछन्दस इति, प्रकृतञ्च कर्माग्निसम्बन्धि भवन्ति। तत् प्रणयनात्मकत्वात्। अतस्ता ऋच ऐन्द्रीयोपि छन्दः सम्पत्तिद्वारा प्रकृतिकर्म समवेतार्था एवेत्यर्थः॥ ६॥

इत्थं ब्राह्मणकृतस्याप्रतिरथ सूक्त † जपस्योपयोग मुक्ताथाग्नेरुद्यमन ‡ समन्त्रकं विधत्ते— "अथैन मिति। "उदु त्वा विश्वे देवा अग्ने भरन्तु चितिभिरित्यादिना § मन्त्रेणेत्यर्थः।

---

* 'गायत्र्यस्ताश्च ग्नेय्यो ( १ ०गाय अत्रश्चाग्नेय्यो )"—इति क, भ।

† 'ब्रह्मकृतस्याप्रतिरथसूक्त'—इति भ, 'ब्रह्मकृतस्याप्रतिरथसूक्त' - इति ञ।

‡ का० श्रौ० सू० १८. ३. १८।

§ वा० सं० १७. ५३।

तस्य मन्त्रस्य ब्राह्मणं प्रागुक्त मित्याह— "तस्योक्तो बन्धु रिति ॥ ७ ॥

उद्यमनानन्तरं * अध्वर्युप्रभृतीनां चित्यं प्रति † गमनं विधत्ते ‡— "अथेति। अत्र "पञ्चदिशो दैवी § रित्यादिभिः पञ्चभि रृग्भिराग्नीध्रपर्यन्त गच्छन्ति। प्रकृत स्ता ऋचः क्रमेण व्याचष्टे— "देवाश्चासुराश्चेत्यादिना प्राजापत्यभूता देवाश्चासुराश्चेत्येते उभये दिग्विषयेस्पर्द्धां कृतवन्तः; पश्चाद्देवासुराणां दिशो वृक्तवन्तः ततोगमस्य स्वाधिनी कृतवन्तः। मन्त्रे पञ्चदिशो दैवीरित्यादिभिः पञ्चभि रृग्भि राग्नीध्रपर्यन्तं गच्छन्ति। अतस्ता ऋचः क्रमेण व्याचष्टे,— "यज्ञ मवन्त्वित्यनेन तथैव यजमानोऽपि द्वेषं कुर्वतो भ्रातृव्यस्य दिशं स्वाधीनाः करोति। "दैवीरित्यनेन एनादिशो देवसम्बन्धिनीः कुरुते। असुरेभ्य उपगमय्य देवैः स्वाधिनीकृतत्वाद्दैवीरित्यनेन तथैव सम्पादितवान् भवतीत्यर्थः। "यज्ञ मवन्तु दैवीत्यनेन प्रकृतस्यैव यज्ञस्यावनं विवक्षित मिति दर्शयति,— "यज्ञ मिम मिति। अमतिशब्दस्याशनेच्छार्थ इति व्याचष्टे— "अपामतिमिति। अशनायोदन्येत्यादि ||

---

* 'उपयमानान्तरम्'—इति क।

† चित्यं प्रति [ आग्नीध्रपर्यन्तं ]'—इति क।

‡ का० श्रौ० सू० १८. ३. १६।

§ वा० सं० १७. ५४।

|| "अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु"—इति पा० सू० ७. ४. ३४।

सूत्रेणागमनाया शब्दः क्यजन्तो निपातितः। रायस्पोष इति धने तद्विषये पोषेवेति वक्तु मभिप्रेत मित्याह,— "रायस्पोष इति रायस्पोषे अधीत्यत्नापि तथैव विवचित मित्याह,— "रायस्पोषे अधीति यजमानस्यैव पूजकत्वात् ॥ ८ ॥

"मामहान" शब्दो यजमानपर इत्याह,— "यजमानो वा इति। अग्नेरुक्थानि स्तोत्रशस्त्राणि पत्रवदङ्गानि भवन्तीत्यग्निरुक्थपत्र इत्याह,— "उक्थपत्र इति। यतो देवाः 'तप्तं घर्मं' घर्मलक्षणं अग्निं 'परिगृह्याय यजन्त'; अत उच्यते मन्त्रे,— 'तप्तं घर्मं' इत्याह— "तप्तं घर्म मिति। उत्तरवाक्य मप्येव मेव व्याचष्टे,— "ऊर्जेति। 'ऊर्ज्जा' आज्यदधिपयःप्रभृति ता रसेनेत्यर्थः ॥ ९ ॥

अग्निर्देवसम्बन्धित्वाद्वारयतृत्वाज्जोषयितृत्व मत्वाच्चाग्निरेव 'देव्यायेत्यादिनोच्यत इति। दैवाग्रेति उत्तरवाक्यद्वयं प्रसिद्धार्थं मित्याह,— "देवश्रीरिति परिगृह्येति 'देवा देवेभ्य इत्यध्वर्यन्त' इत्येतत् पदं व्याचष्टे,— "अध्वरो वा इति। अध्वर्यन्त इति "कव्यध्वरपृतनस्यर्चिलोप इति" * अकार लोपः ॥ १० ॥

"वीतं शमित" मित्यस्य पदद्वयस्यार्थ माह,— "इष्टं स्विष्ट मिति। अध्वर्युहोतृब्रह्मणा यथास्थानं यथायथं मन्त्रं जप एव 'तुरीयो यज्ञ' इति व्याचष्टे,— "अध्वर्युः पुरस्तादिति 'वाकाशिष' इत्यनयोः शब्दयोः समानाधिकरणाशङ्का निवारयति।

* पा० सू० ७. ४. ३९ ।

"ततो नो वाकाश्चाग्निषश्वेति। एतस्य प्रणीयमानस्याग्नेरादित्यात्मकत्वात् ॥ ११ ॥

स एष प्रणीयमानाग्निलक्षणः सूर्यस्येव रश्मिभि र्युक्तो हरितवर्णः 'केशः' तेजोरूपः सविता अनवच्छिन्नं पुरस्तादेतदुद्यच्छति। अतो मन्त्र इम मेवार्थ माचष्टेत्याह,— "सूर्यरश्मिरिति। कृष्णः पशुजनकत्वेन 'पूषा' इति पशव्यः उच्यते वाग्नयेरनुज्ञायां प्रवर्त्तन्त इत्ययमर्थः मन्त्रभागेन विवक्षितः इत्याह,— "पशवो वा इति। 'प्रेरत' इति ईरगता * वित्यस्यादादिकस्य लिटि वहुवचने रूपम्। अग्नेः प्रजापत्यात्मकत्वेन सर्वस्यापि द्रष्टृत्वाद्रक्षितत्वाच्च तत्रायं 'सम्पश्यन्नित्यादि मन्त्रभागः समवेतार्थ मित्याह,— "सम्पश्यन्निति। देवा दीव्यन्त देवसम्बन्धिन्यः पञ्चदिशः अमति मशनेच्छा दुर्मतिं अशास्तीमां मतीश्चापबाधमानाः धने तद्विषये पोषे च यज्ञपतिं सम्बन्धिन्य एनं प्रणीयामानाग्निः लक्षणं यज्ञ मवतु अस्थादिति "छन्दसि लुङ् लङ् लिटः"-इति लोड़र्थे लुङ् प्रत्ययः † किञ्चाय मपि यज्ञः धने तत् पोषेचाधितिष्ठत्विति प्रथममन्त्रस्याय मर्थः। सम्यग्दीप्ते अग्नौ प्रणीयमाने मामहानेत्यर्थं पूजको यजमानोऽधिकारभावेनानुगच्छति। उक्थान्येवाङ्गानि यस्य स उक्थपत्र ईड्य स्तुत्यो यज्ञियो वासवाग्निरध्वर्युणाधारितः किञ्च देवास्तम घर्मात्मकं त मग्नि

---

* "ईर गतौ कम्पने च" अ० आ० १०१८ धा०।

† पा० सू० ३. ४. ६।

परिग्टह्याय यजन्त स्तमत्वादेव च यज्ञरूपं तं आज्यादि-हविर्लक्षणेन।नेनाशमयन्तेति द्वितीयस्यार्थः । होमसम्बन्धिने धारयित्रेऽजोषयित्टतमायाग्नये हविर्दानार्थं तत् प्रणयनं क्रियत इति वाक्य शेषः । किञ्च यो देवश्रीः श्रियन्त इति श्रियः देवाःश्रियो यस्य स तथोक्तः ; भक्तेभ्यः श्रियं दातुं मनो यस्येति श्रीमनः, शतानि पयांसि यस्यासौ शतपयः, त मग्निं परिगृह्य देवाय जनःप्रदेशं गतवन्तः । गत्वा च देवा ऋत्विग्भि र्या देवेभ्यो यज्ञ मिच्छन्तः स्थितवन्त इति तृतीयस्यार्थः । "शमितेति तृतीयैकवचनस्य सु इत्यादेशः । स मित्रा मग्न्यर्थं यागाय हविः वीतं इष्टं यत्र यस्मिन् प्रणयनप्रदेशे हव्यं हवनार्हं मग्नि मध्वर्य्वादीनां मस्मं मपावाक् तुरीयो यज्ञो गच्छति तथाविधानात् तस्मादग्ने ऋग्यजुस्सामलक्षणानि वाक्यानि आशिषश्च नोऽस्मान्न जुषन्ता मिति चतुर्थस्यार्थः । सूर्यस्य रश्मिभिर्युक्तो हरितवर्णकेशः ज्योतिरूपः प्रणीयमानोऽग्निलक्षणः सविता मनवच्छिन्न मुद्यच्छति । तस्याग्ने रनुज्ञायां अग्ने महिमानं विद्वान् पूषा याति ( तदुत्पाद्याः पशवः प्रवर्त्तन्त इत्यर्थः । किञ्च सोऽग्नि र्विश्वानि भुवनानि सम्पश्यन्तेषां रक्षको भवतीति पञ्चमस्यार्थः ) * ॥ १२ ॥

तथैवैतद्यजमानो भ्रातृव्यस्य हंत इति सामान्येनोक्तं मम्प्रति ता एव पञ्चदिशो विशिष्य दर्शयन् तासा मुक्त मर्थं स्वाधीन-

---

* चन्द्रनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र ।

तया प्राप्तिमाह— "तद्या इति, तदिति। 'देवा' यस्मिन् काले 'असुराणां' दिशो वृञ्जत तस्य कालस्य परामर्शः एतच्छब्देनामन्तरोक्ता मन्त्राः परामृश्यन्ते। अवृञ्जातेभ्यो य ममितवन्तः समारोहयन् स्वाधिनो कृतवन्तः। "अथो इति। किञ्च देवा कं तस्मिन् काले 'एताभि' ऋग्भिः 'यातः' सूर्यावस्थानप्रदेशलक्षणान्तरिक्षपर्यन्तं समप्राप्नुवन् तद्देवाय मपि यजमानो भ्रातृव्यतोपगमप्यस्वाधिनो कृतास्ता पञ्चदिशः आतः अन्तरिक्षात्मकाग्नीध्रमण्डपपर्यन्तं सम्प्राप्नोति ॥ १३ ॥

उक्तै र्मन्त्रै आग्नीध्रपर्यन्तं गत्वा तत्रैकस्य पृश्निवर्णस्याश्मन उपधानं विधत्ते *— "अथेति। 'पृश्नि' शब्देन श्वैत्य † मुच्यते पृश्नेरश्मन ‡ उपधानेनादित्यस्यैवोपधानं भवतीत्याह। "असौ वा इति। आदित्यमण्डलसादृश्यप्रदर्शनेनोक्त मश्मनः प्रश्नित्व मुपपादयति। पृश्नि र्भववीति तस्य चाश्मन उपधानं गार्हपत्याहवनीययो र्मध्ये कर्त्तव्य मित्याह,— "त मन्तरेणेति। गार्हपत्याहवनीययोरधस्तनोपरितनलोकद्वयात्मकत्वाल्लोकद्वयस्य च मध्ये सूर्यस्य तपनात् सूर्यात्मकस्याश्मनस्तत्रोपधान मुपपन्न मित्याह। ( "अयं वै लोक इति। गार्हपत्याहवनीययो र्मध्यभागस्योपधान

---

* "आग्नीध्रदेशाद्दक्षिणं पृष्ठासहितं पृश्न्यश्मान मुपदधाति"—इति का० श्रौ० सू० १८. ३. १६।

† "! श्वैत्य०" or "चैत्य० ?" -इति क।

‡ "पृश्न्य०नं तनुं वृत्तं पाषाणं विचित्रवर्णं वा"—इति का० श्रौ० सू० १८. ३. २०।

स्थानतया विज्ञानादाग्नीध्रादन्यत्रापि तदुपधानं स्यादित्यत आह ॥ १४ ॥

"आग्नीध्रवेलाया मिति। 'वेला' शब्दः अवकाश माचष्टे। गार्हपत्याहवनीययोरधस्तनो) * परितन लोकात्मकयो मध्यवर्त्ति-त्वयाग्नीध्रस्यान्तरिक्षात्मकत्वं व्यध्व इत्यर्द्धमार्ग उच्यते, तत्रैतस्या-श्मन उपधानं क्रियते तस्मादितः प्रदेशादूर्द्ध्वं † मार्गे एष सूर्य स्तपतीत्यर्थः ॥ १५ ॥

अथ तस्याश्मन आदित्यात्मकत्वादादित्यस्य च प्राणाद्या-त्मकत्वात्तदुपधानेनात्मनि प्राणादिधारणं सम्पाद्यत इत्याह,— "स एष इति। 'स' आदित्यात्मकादित्यरूपत्वात् आदित्यस्य च प्राणत्वं तदुपाय प्राणिन श्चेष्टन्ते। तदस्तमये तु न चेष्टन्त इति। अतएव श्रूयते— "यो सौ तपन्नुदेति। स सर्वेषां भूतानां प्राणा-नादायोदेति।०—०। असौ योऽस्तमेति। स सर्वेषां भूतानां प्राणा-नादायास्तमेति इति ‡। प्राणत्वादेष वायुरूपत्वं प्राणिना मेव जीवनकालसम्बन्धात्। "आयुर्ह्येतदिति। एषो श्मा यतः कारणा-दायु एतदिति नपुंसकलिङ्ग मायुरित्येतदपत्त्वं तस्यायु रत्नं तद्वता मेव भोक्तृत्वात्। अत एतदश्म तस्मात् तदुपधानेन स्वकीय मात्मनि प्राणादीन् धारितवान् सम्भवति ॥ १६ ॥

अथ तस्योपधाने मन्त्रद्वयं प्रदर्शयद् व्याचष्टे,— "स उप-

---

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र।

† 'प्रदेशाद् यर्द्ध्वे ?'— इति क; 'प्रदेशादूर्द्ध्वो' इति ज।

‡ तै० आ० १. १४. १।

दधाति विमान एष *" इति । 'हि' यस्मात्कारणात् 'एष' सूर्यो-ऽभूत ग्रामस्य निर्माता द्युलोकस्य मध्ये ऽऽस्ते, अत उक्तं,— 'विमान' इति उदयमानः सूर्यः पृथिव्यादीन् स्वप्रकाशेनापूरयतीति। त मर्थ माहेति व्याचष्टे,— "ऽऽप प्रिवानिति। 'प्र पूरणे' †— इत्यस्माद्वर्तमानार्थस्य लिटः क्वसुरादेशः। 'विश्वाचीघृताची पदाभ्यां विश्वेषां भूतानां ‡ च व्यापनात् वेदयः स्रुचश्च विवक्षन्त इत्याह,— "स विश्वाचीरिति, "पूर्व मपर मिति। पृथिवी द्युलोकमभिधीयन्ते, किञ्च 'पूर्व' मित्यनेन पूर्वं चितो गार्हपत्या उच्यते,— अपर मिति अनेनेदानीं चीयमान आहवनीय इति व्याचष्टे,— "अन्तर पूर्व मिति ॥ १७ ॥

द्वितीय मन्त्रे,— "उच्चा समुद्रः § । ( पूर्वत्वाद्योनिं" मध्ये दिवस इति पादत्रयार्थः प्रसिद्धा इत्याह। "उच्चा समुद्रो अरुण इति चतुर्थपादे 'रजः' शब्देनैते लोका ) ‖ विवक्ष्यन्त इत्याह,— "विचक्रम इति। भूत ग्रामस्य निर्माता द्यावा पृथिव्या अन्तरिक्षं वा समन्तात् पूरयन् एष सूर्यो द्युलोकस्य मध्ये तिष्ठति; किञ्च स सूर्यो पूर्वापरञ्च केतुं लोक मन्त-

---

* वा० सं० १७. ५६ ।

† अ० धा० १०६१ धा० ।

‡ विश्वेषां हविषां घृता'— इति भ,

§ वा० सं० १७. ६० ।

‖ वन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ञ पुस्तकादन्यत्र ।

राद्यावापृथिव्यो र्मध्ये गार्हपत्याहवनीययो र्वा मध्ये विश्व-चोभ्युन स्वाभिनष्टे पश्यतीति प्रथमस्यार्थः। उत्सासेचक "आदित्याज्जायते वृष्टिः* इति तस्य वृष्टिहेतुत्वात्। अतएव समुद्रात्मकः वर्णतारुणः पर्णशब्देन पतन मुच्यते। शोभन-तपन एवंविधः सूर्यस्य लोकस्य पितृरूपस्य योनिं स्थान माविवेश भूलोकादादित्याज्जायमान इव दृश्यत इति तस्य पितृलोकोपचारः। किञ्च देवो मध्ये आग्नीध्रमण्डपलक्षणे निहितः वर्णतः 'पृश्निरश्मा' अश्मरूपः सूर्यः विविधं लोका-क्रमते 'छन्दसि लुङ्लङ्लिट्' इति वर्त्तमाने 'लिट्' "विक्रम-माणो वा एष एषां लोकाना मन्तान्याति"-इति श्रुतेः। रजस इत्येकवचनं अन्तानिति। (द्विवचनं वा विवक्षितं लोकाना मन्तान् प्रीतान् पाति स्वकीयेन प्रकाशेन तमो निवर्त्तयन् पदार्थांश्च दर्शयन् रक्षतीति)† द्वितीयस्यार्थः॥ १८॥

उपधान मश्मयोर्द्वित्वं प्रशंसति,— "द्वाभ्या मिति। अथ तयोरेव छन्दः प्रशंसति,— "त्रिष्टुभ्या मिति। 'एष' सूर्य स्त्रैष्टुभ (त्रैष्टुभे अन्तरिक्षे वर्त्तमानत्वादन्तरिक्षस्य त्रैष्टुभ)‡ त्वं तैत्तिरीयके सूर्ये श्रूयते— "गायत्री पृथिवी त्रैष्टुभ मन्तरिक्ष मिति§ प्रकृतस्यात्मन इष्टकान्तरवदुपधानस्य विधानात्तदेव

---

* मनु सं० ३. ७६।

† बन्धनीचिह्नान्तः पाठो नास्ति ज-पुस्तकादन्यत्र।

‡ बन्धनीचिह्नान्तः पाठो नास्ति ज-झ-पुस्तकयोरन्यत्र।

§ "गायत्री वै पृथिवी त्रैष्टुभ मन्तरिक्षं"—इति तै०सं० १. ७. ५. ४।

साधनप्रसक्तो निषेधति न सादयतीति तत्रोपपत्ति माह— "असन्नो ह्येष इति। स एष सूर्यः असन्नः क्वचिदेवावस्थितो न भवति सर्वत्र परिभ्रमणादित्यर्थः। माभूदसन्नत्वात्तस्य सादनं सूददोहसाधिवदन मपि न कर्त्तव्य मित्यत आह— "न सूददो हसाधिवदतीति। सूददोहसाधिवदन मपि न कर्त्तव्यं कुत इत्यत आह,— "प्राणो वा इति। प्राणात्मके सूर्ये प्राणात्मकस्य सूददोहस्या पिष्टपेषणवन्निष्फलत्वादित्यर्थः। तस्योपहितस्याश्मनो रक्षां विधायाहवनीयदेशंप्रति गच्छेदिति विधत्ते,— "तन्नि- धायेति। यथाऽश्मान न नश्येत्तं निधायाग्नीध्रसमीपदेश मति- क्रामेयु*रित्यर्थः ॥ १८ ॥

"तस्योक्तो बन्धुरिति "इन्द्रं विश्वा अवीवृधन्† इतीन्द्रं हि सर्वाणि भूतानि वर्द्धयन्तीत्यादिनास्य ब्राह्मणं षष्ठकाण्डेऽभि- हितम्। "देवह्वरित्यादिकस्याय मर्थः,— यतो यज्ञो देवानाह्वय- तीति देवह्वः 'सुम्न' मिति सुखनामधेयं सुम्नयाह्वयतीति सुम्नह्वः तत् साधनत्वात्। अतो देवह्व यंज्ञो देवानावक्षत् आवहतु सुम्नह्वर्यंज्ञो देवानावहत्वित्युच्यते। पक्षस्यैवाग्निरिति अग्निर्देवो देवान् यजतु आवहेत्येतदुक्तं भवतीति यक्षत्। वक्षत् यक्षत् वहतेर्यजेश्च सिब्बहुलं लेटीति‡ सिप्प्रत्ययो लेटोऽडाटावित्य- डागमः इतश्चलोप इति तिप इकारलोपः ॥ २० ॥

---

* निधायैनमतिक्रामतीन्द्रं विश्वा इति"—का० श्रौ० सू० १८. ३. २१।

† वा० सं० १७. ६१।

‡ पा० सू० ३. १. ३४।

"वाजस्येति" "उद्ग्राभश्चेति" मन्त्रद्वयं * निगदव्याख्यात मित्याह,— "वाजस्य मा प्रसव इति। पञ्चदिशो दैवीरित्यादिभि र्मन्त्रै गार्हपत्यादाग्नीध्रपर्यन्तं गमने भ्रातृव्यसम्बन्धिनीः सूर्यादर्वाचीः। पञ्चदिशस्ततो गमय्य स्वयं प्राप्तवान् भवतीति उक्तम् ,—

अथ "इन्द्रं विश्वा अवीवृधन्" इत्यादिभि र्मन्त्रैराग्नीध्रादाहवनीयं पर्यन्तं गमने सूर्यादूर्ध्वा भ्रातृव्यसम्बन्धिनीश्चतस्रो दिश स्तथैव प्राप्नोतीत्याह ,— "तद्या अमुष्यादित्यादिना — "आत इति द्युलोकपर्य्यन्त मित्यर्थः ॥ २१, २२, २३ ॥

चित्याग्नि समीपगमनानन्तरं † क्रमध्व मित्यादिभिः पञ्चभि र्मन्त्रै ‡ स्तस्यारोहणं विधत्ते §— "अथाग्नि मिति। चित्याग्निरूपरिधार्य्यमाणे उख्याग्नौ होमविधानेन तत्र तद्दा वचनार्थे कस्याश्चिदपेक्षणादग्निनिधाने यजमानस्यापि निधानात् तदपेक्षा मारोहन्तीति बहुवचनम्। "स्वर्गो वै लोको नाकः" इत्यदिना-रोहणमन्त्रान् व्याचष्टे— "क्रमध्व मिति ‖ तेषा मेव परोक्षेणाभिधानम् , 'अनेनाग्निना' चित्याग्निना 'एतम्' इत्यभिनयेन निर्देशः 'एतं स्वर्गं' क्रमध्वं अप्रतिविधं न गच्छतीत्येतदुक्तं भवतीत्यर्थः। एते क्रममाणा अध्वर्युप्रभृतयः एन मुख्याग्निं हस्तेषु बिभ्रतः धारयन्तः अतः रसा एवार्थो मन्त्रेण प्रतिपाद्यते।

---

* वा० सं० १७. ६३, ६४। † 'गनामंवरं'—इति छ, भ।

‡ वा० सं० १७. ६५—६६।

§ "क्रमध्व मग्निनेति चित्यमारोहन्ति।"—इति का० श्रौ० सू० १८. ४. १। ‖ वा० सं० १७. ६५।

"दिवस्पृष्टं स्वर्गंल्लोक मित्यनेन मन्त्रे 'स्वर्गत्वा' इत्यत्र स्वरित्य-स्यार्थ उक्तः। अत्र 'दिव'-शब्देन द्युलोक उच्यते, द्युलोकस्य पृष्टं उपरितनं स्वर्गं सुखातिशयहेतुं तस्यैवस्थानविशेषां गत्वा देवेभिर्देवैर्मिश्राः संयुताः सन्तस्तिष्ठतेत्यर्थः। 'दिवस्पृष्ट' मिति षष्ठ्याः पतिपुत्रेत्यादिना विसर्जनीयस्य सकारः ॥ २४ ॥

प्राची * वै दिगग्ने रिति। प्राचीदिगग्नेः सम्बन्धिनी खलु अतएव तैत्तिरीयकं— "प्राचीदिक् अग्निर्देवता"-इति †। "अस्य त्व मिति। अस्येष्टका स्थलरूपस्याग्ने त्वं पुरोवर्त्तमानोऽग्नि र्भवेदं यत्ते इत्युक्तं भवति। "दीप्यमान इति। दीयते इत्यस्यार्थ-कथनम् ॥ २५ ॥

"पृथिव्या अह ‡ मिति। गार्हपत्यस्याग्नीध्राहवनीयानां पृथिव्यादिलोकत्रयात्मकत्वात् क्रमेण तत्रागमनात् पृथिव्यादि-लोकत्रयं क्रमेण रूढावानस्मीत्यर्थः। 'आरुह' मिति "छन्दस्युभयथा" ... "कमृदृरुहिभ्य श्छन्दसि-इति च्लेरङादेशः" § "दिवो नाकस्येति। नाकस्य सुखहेतुभूतस्य द्युलोस्य 'पृष्ठात् ज्योतिर्विशिष्टं' प्रकाशमानस्वर्गं लोक 'मगामह' मित्येतदुक्तं भवति। अत्रापि पूर्ववत् सुखाति-शयहेतुभूतो द्युलोक देव्यविशेषः स्वर्गशब्देनोच्यते ॥ २६ ॥

"न हैवेति। ये स्वर्गंल्लोके यन्ति ते फलान्तरन्नापेक्षन्ते खलु, अत उक्तं स्वर्यन्त ॥ इति। एष एवेति सर्वेण प्रका-

---

* वा० सं० १७. ६६। † तै० ब्रा० ३. ११. ५. १।
‡ वा० सं० १७. ६७। § पा० सू० ३. १. ५२।
॥ वा० सं० १७. ६८।

रेण जगद्धारयतीति । 'एष एव यज्ञो विश्वतोधारः' येन एवं यज्ञं वितन्वते एत एव सुविद्वांसः खलु विदुषा मेव यज्ञ निष्पादकत्वादित्यर्थः ॥ २७ ॥

"अग्ने प्रेहीति* । "इम मेतदिति । 'त्व मेषां' देवान् प्रष्टुमिच्छतां 'प्रथमः' प्रेहीति इम मुख्याग्नि माह-अग्नेजुष्टश्चस्रुवंदुपकारत्वात् । 'इयक्षमाणा' इति व्याख्यातं यजमानं भृगुभिरितिस्पष्ट मन्यत् । उक्त मन्त्रस्यार्थेन चित्याग्नेरारोहणेन स्वर्गे लोके विद्यमाना भ्रातृव्यसम्बन्धिनीः पञ्चदिशः पूर्वतः प्राप्तवान् भवतीत्याह ॥ २८ ॥

"तथा अमुष्मिंल्लोक इति । अत्रापि 'नाक:' इति द्युलोकादुपरितम स्वर्गावधित्वेनोच्यते ॥ २९ ॥

चित्याग्निसमारोहणानन्तर मस्मिन्मुख्याग्नौ होमं विधत्ते । "अथेति । अभि जुहोति अभिहोमेनेप्सित मत्वादेन मिति कर्मणि द्वितीया विहिता । आहुतिश्चित्यं प्राप्तस्याग्ने रुपरिष्टादन्नं सम्पाद्यत इत्याह— "एतद्वा इति । विहिते होमे द्रव्यं विधत्ते— "कृष्णायै शुक्लवत्सायै पयसा" † इति, उक्तलक्षणाया गोः पयस उपादाने कारण माह— "रात्रि र्वा इति । रात्रि खलु कृष्णाशुक्लवत्सास्यारात्रेरसावादित्ये वत्सः यथा गोः समीपे वर्त्तते तद्वदस्य रात्रिसमीपे वर्त्तमानत्वात् । अय मेवार्थ स्तैत्तिरीयके श्रूयते— "अग्निश्चादित्यश्चरात्रेर्वत्सश्चेति आदित्य"-इति । एवञ्चास्याग्नेरादित्यात्मकत्वात् तथाविधाया गोः पयसा होमे स्वलोकभागेन तदेव विक्रियते,— "स्वेन

* वा० सं० १७. ६६ । † का० श्रौ० सू० १८. ४. २ ।

रसेनेति। तेन प्रीणितवान् भवति, प्रीणयितस्यादित्यात्मकस्याग्नेरूपा एव वर्त्तमानत्वेनोपधार्यमाण स एवोख्याग्नौ जुहुयादित्याह,—"उपरीति। प्रकृतहोमे साधारणं जुहुः प्राप्नोतीति तदपवादत्वेनदोहनं विधत्ते— "दोहनेनेति। दोहनेन हि पयः प्रदीयत इति दोहनान्तरं पयान्तरे दोहनेने खलु पयः प्रदीयत इत्यर्थः॥ ३०॥

प्रकृत मेवातिहोमं प्रकारान्तरेण प्रशंसति— "यद्वेवेति। अग्नेः शिरोवत् प्राधान्यात् सच्छिरसं पयसः प्राणत्वं तत् पुष्टिहेतुत्वात्। "यथा स्वयमातृण्णा मिति। होमावसरे स्वयमातृण्णाया उपरि किञ्चिद्यथा 'प्रचरेत्' तथा होमं कुर्यात्; एवञ्च स्वयमातृण्णायाः प्राणत्वात्। अग्नेस्तु शिरस्त्वात् प्राणश्च शिरश्चेत्युभे अपि ययो लक्षणेन रसेन सन्तनोति तदेव विवृणोति 'सन्दधाति' परस्परसम्बन्धं करोतीत्यर्थः। प्रकृतहोमो मन्त्रौ दर्शयन् तत्र प्रथममन्त्रस्यब्राह्मण षष्टकाण्डे प्रागेवाभिहित मित्याह— "नक्तोषासेति *॥ ३१॥

---

* वा० सं० १७. ७०।

"स्वयमातृण्णा मध्यग्निं धारयन् शुक्लवत्सा पयसाभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णा मवसिञ्चन्नक्तोषासेति। स्वयमातृण्णाया उपरि धारयन्नग्निम् कृष्णायाः गोः शुक्लवत्सायाः पयसा दोहनेनाभिजुहोति स्वयमातृण्णा मवसिञ्चन्। स्वयमातृण्णाया उपरि प्रतिप्रस्थाता त मिध्यग्निं धारयन् न्मयेन पात्रेण जुहूस्थानीयेन जुहोति॥"

—इति का० श्रौ० सू० १८. ४. २, २।

द्वितीयं मन्त्रं व्याचष्टे— "अग्नेः सहस्राक्षेति * हिरण्य शकलैर्वा इति। प्रकृष्टोऽग्निः प्रोक्षणे विनियुक्तैः † सहस्र-सङ्ख्याकैः‡ हिरण्यशकलैः सहस्राक्षः खलु, अतश्च मन्त्रे तथा सम्बोध्यत इत्यर्थः। प्रकाशकत्वसाधारण्येन हिरण्यशकलाना मक्षितोपचारः। "यददः शतशीर्षेति। प्रजापतिशब्देनेनोचितेष्वसुषु अन्तवर्त्तमानेन अन्यौ प्रतिष्ठितेषु तेषु स एव शतशीर्षोरुद्रः समभूदिति काण्डस्यादावुक्तम्। अतोऽत्राह: श-शब्देन सकाल: परामृश्यते अतोस्मिन् काले "शतशीर्षाऽरुद्रो सृज्यतेति। यत्र अत उक्तं मन्त्रे शतमूर्द्धन्नितीत्यर्थः, यः शतशीर्षा भवति तस्य शतसङ्ख्याकाः प्राणाः सहस्रसङ्ख्याकाः व्यानाश्च भवन्ति। शतं सहस्र मित्यपरिमित नामधेयम्। तस्मादुच्यते,—" शतं त इति। त्वं सर्वस्मै इति। 'सहस्र' मित्यपरिमित सङ्ख्यावचनात् सहस्रस्येत्यनेनापरिमित सङ्ख्यावत इत्यस्यार्थस्याभिधानात् सर्वस्या इत्येतदुक्तं भवति। सहस्रेति लिङ्गव्यत्ययः "अधीगर्थदयेशाङ्कर्मणि"§-इति षष्ठी प्राप्तौ षष्ठार्थे चतुर्थी वक्तव्येति। 'सर्वस्मै राय इति चतुर्थी। "एष वै वाज इति। 'वाज'-शब्दोऽन्नवाची तद्धेतुत्वादेवो ऽग्निर्वाजः खलु अतस्तस्मै ते विधेम वाजाय स्वाहेत्यनेन त मग्निं प्रीणाति। हे सहस्राक्षः शतमूर्द्ध अग्ने! ते शतसङ्ख्याकाः

---

* 'वा० सं० १७. ७१।

† इहैव पुरस्तात् का० ८. ७४. ७।

‡ 'इयंत्याकैः'—इति क. भ, ग।

§ पा० सू० २. ३. ५२।

प्राणाः सहस्रसङ्ख्याकाः व्यानाश्च भवन्ति ; त्वं सर्वस्य धनस्य 'ईशिषे' ईश्वरो भवति ; तस्मै अन्नहेतुत्वे तदात्मकाय ते वयं परिवरेम । इदं हवि स्ते स्वाहुत मस्तु इति मन्त्रार्थः ॥ ३२ ॥

मन्त्रगतेन द्वित्वेन सकलस्याग्नेरभि होमः सम्पद्यत इति प्रशंसति ,— "द्वाभ्या मिति ॥ ३३ ॥

अग्नि होमानन्तर मुख्याग्नेश्चितीनां मुपरि निधानं विधत्ते— "अथैन मिति । निधानमन्त्रे "सुपर्णोऽसि * गरुत्मान् † इत्यस्योपयोग माह । 'एतद्वा' इत्यादिना लोके हि योनौ सिक्तं प्रजननं समर्थं रेतो विक्रियते अवयवविभागवत् क्रियते । अतोऽत्रापि योनिरूपाया मुखाया संस्कृतस्याग्ने रेतस्यन्नस्यापि विकृत्या भवितव्य मिति । पूर्वं विकृत्या विकृतिसाधनभूतेन मन्त्रेण "सुपर्णोऽसि गरुत्मान्" इत्यादिकेन सुपर्णं गरुत्मन्तं कृत्वा विकृतवान् ‡ । तथा चयनकालेऽपि 'सुपर्णं गरुत्मन्तं' एव कृत्वा विकृतवान् ; सम्प्रति 'सुपर्णोऽसि गरुत्मान्' इत्यादिकेन 'सुपर्णं गरुत्मन्त' कृत्वा निहितवान् भवति । चीयमानस्याग्नेः पक्षाकारेण चयनात् 'सुपर्णोऽसि गरुत्मान्' इत्युक्तम् । 'गरुत्मान्' प्रशस्तपक्षत्वात् , अतएव 'सुपर्णः' पर्ण-शब्देन

---

* "तस्या मग्निं निदधाति सुपर्णोऽसीति वषट्कारेण स्वयमातृण्णायां सुपर्णोऽसीति ऋग्द्वयेन वषट्कारेण चाग्निं स्थापयतीत्यर्थः ।"
—इति का० श्रौ० सू० १८. ४. ५. ६ ।

† वा० सं० १७. ७२ ।

‡ "वित्तवान्"—इति क ।

पतन मुच्यते शोभनपतनविशिष्ट इत्यर्थः। "एवं ह्येष इति। (एष अग्निरेव मुक्तप्रकार मेतत् सर्वं करोति यतः अत उक्तं मन्त्रे पृथिव्याः सीदेत्यादीत्यर्थः॥ ३४॥

द्वितीयं मन्त्रं व्याचष्टे— "आजुह्वान इति।) * 'सुप्रतीकः' शोभनावयवः तत्र मितरान् प्रति न अपि तु अस्मान् मन्त्रो वेति व्याचष्टे— "न सु प्रतीक इति। अस्योख्याग्ने रेष चित्याग्निः स्वसम्बन्धिस्थानम्। अतोऽग्नेः 'स्वो योनि' मित्यादिना चित्याग्निं साध्वाधितिष्ठते तदुक्तं भवतीति व्याचष्टे— "अग्ने स्वामिति अस्मानिति पृथव्यन्तरिक्षाभ्या मुपरिवर्त्तमानत्वेन द्युलोकात्मकत्वात् 'अस्मिन्' चित्याग्निलक्षणे द्युलोके 'अध्यासीद इत्यर्थः। विश्वेदेवा इत्यनेन 'विश्वैर्देवैः सह' त्वं यजमानं मन्त्रं सादितवान् भवति हे अग्ने! त्वम् गरुत्मान् अतएवं शोभनपतनोऽसि, तादृश त्वं पृथिव्यां पृष्ठे उपविशस्त्व-दीयाभासो अन्तरिक्ष मापूरय ज्योतिषा दिवं दृढां कुरु तेजसा दिशोऽपि दृढो कुर्विति प्रथमस्यार्थः। भाः ज्योति स्तेज इति प्रकाशविशेषाः। हे अग्ने! त्वं पूर्वस्यां दिशि आह्वयमानोऽस्माकं शोभनावयवो भूयाः, अत स्वां योनिं चित्याग्नि' साध्यक्रियया अधितिष्ठ साधुयेति तृतीयैकवचनस्य सुपां-सुलुगित्यादिना यादेशः। अस्मिन् चित्याग्निरूपे उत्तरे सधस्थेषु लोके अध्यासीद, हे विश्वेदेवाः! यूयं यजमानश्चाग्न

---

* बन्धनीचिह्नान्तः पाठो नास्ति क-ख-पुस्तकयोरन्यत्र।

सीदत। यूयं सम्प्रदानत्वेन सीदति। यजमानोऽधिकारित्वेन सीदत्विति द्वितीयस्यार्थं स्पष्टार्थम् ॥ ३५ ॥

उत्तरवाक्यद्वये निधानान्तरं अस्मिन्नग्नौ समिधामाधानं विधाय ताः समिधश्चित्याग्निं प्राप्तस्याग्नेरुपरिष्टादन्नरूपेण * स्तौति— "अथास्मिन्निति ॥ ३६ ॥

तत्र शमीमयीं समिधं प्रथम मादध्यादित्याह— "स वा इति। शमीमयाः प्रथममाधाने हेतु माह— "एतद्वा इति। 'एतस्या माहुत्या' मित्यनेन मभिजुहोतीति विहिताहुतिः परामृश्यते। एतस्या माहुत्यां हुतायां मग्निः प्रदीप्तः सन् 'उदज्वलत्'। पश्चादग्निं दृष्ट्वा येनोपायेनायन्नो न हिंस्यादिति। देवा स्तस्माद्भीताः पश्चादहिंसोपायत्वेन तें शमीमयीं समिध मपश्यं दृष्ट्वा च मया एत मशमयन् यत एव मनया शमयन् तस्मादसौ शमीनामधेया ऽभूत्। अतः प्रथम शमीमयाः समिध आधानेन तथैवाय मपि यजमानः शान्त्यै एनं शमयति न जग्धे। जग्धि भंक्षणं भक्षणाभावाय अहिंसायै इत्यर्थः ॥ ३७ ॥

अथ तस्या शमिसमिध आधाने मन्त्रं दर्शयति †,— "तां

---

* "प्राप्तस्याग्ने रुपरितनान्नरूपेण"—इति ज; "प्राप्तस्याग्ने रुपरितनारूपेण"—इति छ, झ, ञ।

† "समिद्दाधानं प्रामीलीवैकङ्कत्यौदुम्बर्यस्ताः सवितुरिति (१७. ७४—७६) प्रत्यृचम्"—इति का० श्रौ० सू० १८. ४. ६।

सवितु रिति *। "कण्वो हैना मित्यय मर्थः,— कण्वो महर्षिः 'एनां' शमिरूपां गां 'ददर्श' खलु अतश्च 'सा' 'सहस्रधारा भूत्वा ऽस्मै कण्वाय 'सर्वान् कामान् दुदुहे' तस्मादाहिता शमी तथैव यजमानाय सर्वान् कामान् दुग्धे अस्याग्ने रुत्पादकत्वेन सम्बन्धिनी। अतएव श्रुतिः,— "शमीगर्भादग्निं मन्थन्ति" —इति †। 'प्रपीनां' प्रकर्षेणपीवरीं 'सहस्रधारां पयसा महीं महतीं शमीरूपायां गां कण्वमहर्षिरदुहेरन्। उरणीयस्य सवितुरभिमतां 'चित्रां' चायनीयां 'सुमतिं' शोभन मतिं 'विश्वजन्यां जनहितं यस्याः सा तथोक्ता सर्वस्योत्पादयत्रीं ता मह माहृण इत्यर्थः ॥ ३८ ॥

शमिसमिदाधानानन्तरं वैकङ्कतसमिदाधानं विधाय तत्र वैकङ्कतसमिद्धोमब्राह्मणं प्रागेव षष्ठकाण्डेऽभिहित मित्याह— "द्यौर्वा इति। द्वितीयपादे अवसरे 'सधस्थ' इत्येनान्तरिक्ष मुच्यत इत्याह,— "अन्तरिक्षं वा इति। 'यस्माद्योनें रित्यत्र योनि-शब्देनैष भूलोको विवक्ष्यत इत्याह,— "एष वा इति। 'प्र त्वे हवींषि' इति तुरीयः पादः प्रसिद्धार्थ इत्याह। "यदा वा एष इति। हे अग्ने! ते त्वां 'परमे जन्मन्' उत्पत्तिस्थाने द्युलोके 'विधेम' ‡ परिचरेम न केवलं द्युलोक एव कि

---

* वा० सं० १७. ७४।

† तै० ब्रा० १. १. ६. १।

‡ वा० सं० १७. ७५।

स्तोमैः स्तुतिभिरुपलक्षितावयं अवरे द्युलोकादधस्थाने सधस्थे सहस्थाने अन्तरिक्षेऽपि विधेम किञ्च कस्मान्न पृथिव्यात्मकद्योते स्त्व मुदारिथ उद्गतवानसि ऋ गतौ लिट् संहितायां अन्येषा मपि दृश्यत इति दीर्घः त मिनं लोकं अनया समिधा यज्ञेषु द्युलोकादीना मग्निकारणत्वेनाग्नेः कारणात्मकोरे ( ? ) होमि उक्तः। अथ 'प्र त्वे हवींषि' इत्यनेनकार्याकारेऽग्नौ होमो विधी-यते। ततः 'समिद्धे' सम्यक् प्रज्वलिते त्वे त्वय्येपि छान्दसत्वात् हवींषि प्रजुहुरे प्रजुहुविरे विपश्चित इति शेषः, इरयो रे इति इरे प्रत्ययस्य रे आदेशः। अतो वय मपि समिद्धे त्वय्येतां समिध मादधाति इत्यर्थः॥ ३९ ॥

वैङ्कतसमिद्धोमानन्तर मौदुम्बरसमिद्धोमं विधत्ते— "अथ उदु-म्बरी * मिति। आधातव्याया उदुम्बरसमिधः कथञ्चित् गुण माह— "कर्णकवती भवतीति। कर्णक शब्देनात्र पत्रशाखादिकं विवक्ष्यते। पत्रादीनां पशुपुष्टि † साधनत्वेन पशत्त्वात्तथाविधायाः समिधो होमेन पशुरूपेणैवेनं ‡ प्रीणाति। तथाविधायाः समि-द्धोमसम्भवे किं कुर्यादिति; तत्राह,— 'यदि कर्णकवतीं न विन्देद्' इति 'दधिद्रप्सं' दधिविन्दु 'मुपहत्याद्' समिधि संश्लेष्या-

---

* "वैकङ्कतीं प्रेद्धो अग्न इत्यौदुम्बरी मित्यर्थः।"
—इति वा० सं० १७. ७४. भाष्यम्।

† "पशुपुष्टि०"—इति क।

‡ "पशुरूपेणैवानेनेनं"—इति ज।

दध्यात्। तत्र समिधि 'दधिद्रप्स उपतिष्ठते' इत्येतत् तदेव पशुरूपं भवति। अतस्तथाविधाया: समिधो माधानोव- त्वेन मग्निं पशुरूपेणान्नेन प्रीणाति,— प्रेद्धो अग्ने दीदिहि * इत्यादि ॥ ४ ॥

समिद्धोमानन्तर माज्याहुतीर्विधत्ते,— "अथाहुती रिति। यथेति लोके भुञ्जानस्य पुरुषस्य यथा शाकसूपौदनादिकं परिविष्य पश्चात् जलादिकं पेयं पाययेत् तादृक् तदा- ज्याहुतिकरणं भवति। प्रथम समिद्धोमस्यपरिवेषणवत् कृत- त्वादित्यर्थ:। तत्रासाधारणेन स्रुचैव सर्वासां होम प्रसक्ता- दाह,— "स्रुवेणेति। अग्ने त मद्याश्व मित्यस्य प्रथमाहुति- मन्त्रस्य तात्पर्यार्थ माह,— "यस्ते हृदिस्पृगिति। हृदिस्पृश मिति हृद्युभ्यां ङे रुपसङ्ख्यान मिति सप्तम्यालुक्। हे अग्ने 'ते' तव हृदिस्पृक् † हृदयङ्गम 'स्तोम' स्तोत्र मस्ति, ते तं स्तोमं 'ऋध्या' समृद्धक्रिया 'समित्ये' तदुक्तं भवति, अनेन मन्त्रेणेत्यर्थ:। अथोऽस्य मन्त्रस्य छन्दो प्रशंसति,— "पङ्क्त्या जुहोति। पञ्चपादा यस्या: सा पञ्चपादा "संज्ञासु पूर्वस्य ‡"- इति पादशब्दान्त्यभावे "पादोऽन्यतरस्याम् §"-इति। विकल्पेन

---

* वा० सं० १७. ७५।

† वा० स० १७. ७६।

‡ पा० सू० ५. ४. १४०।

§ पा० सू० ४. १. ८।

डीति प्राप्ते "टाप्चि *"-इति षट् प्रत्ययः। 'पञ्चचितिकोऽग्नि' रित्यनेनाग्नेः पञ्चत्व सङ्ख्यायोगो दर्शितः "पञ्चऽर्त्तवः संवत्सरः" संवत्सर इत्यनेनापि प्रकारान्तरेण स एव प्रदर्श्यते। हैम शिशिरयो रुभयोरपि विहित वैशिष्याविशेषणैकत्व मभिप्रेत्योक्तं "पञ्चऽर्त्तव इति। एवञ्चाग्नेः पञ्चात्मकस्यास्य पञ्चपदपङ्क्ति साध्यो होमे तत् समितनैवान्नेनैवं प्रीणातीत्यर्थः॥ ४१॥

देवताविशेषं सम्बन्धेन द्वितीया माहुतिं दर्शति,—"अथेति। विश्वकर्मा देवतास्या इति 'वैश्वकर्मणी' माहुतीं जुहोति कुर्यादित्यर्थः। ननु अस्य होमस्याग्न्यर्थत्वादत्र विश्वकर्मा-देवत्यत्वे प्रकृतसमन्वितार्थ तानस्यादित्यत उक्त;— "विश्वकर्माय मग्निः रिति। अग्ने तद्धोमसाधनं मन्त्रं व्याचष्टे— "चित्तिं जुहोमीत्यादिना †। अत्र चिति-शब्दार्थं दर्शयन् तस्य चात्र सम्बन्धिविशेषोपादानाभावेन साधारण्यात् सम्बन्ध्यन्तरप्रसक्ति निवारणेनोत्तर वाक्योपात्तदेव सम्बन्धित्वे दर्शयति— "चित्त मेषा मिति। तथा देवा इहागमन्नित्यत्वागमन्नित्येतस्येदं व्याचष्टे— "यथा देवा इहागच्छानिति। आगच्छानिति आगच्छेयु रित्यर्थः। गमेर्लुङि च्लेरङ्। 'ऋतावृधः', ऋत-शब्दस्य सत्य मर्थं इत्याह। "सत्यवृध इति विश्वस्येत्यादि पदद्वयं व्याचष्टे— "योऽस्येति सर्वं दैवाच्चित मित्यनेन विश्वा-

* पा० सू० ४. १. ६।

† वा० सं० १७. ७८।

च्छादाभ्य मित्येतद्व्याख्यातम् । कीदृशा देवाः वीतिहोत्राः होत्रा इति यज्ञनाम* वीतिरभिलाषो होत्रा येषां ते वीतिहोत्राः कामित यज्ञाः । होत्रा शब्दो यजमाननामसु पठितः । ऋता-वृधः सत्येन वर्द्धमानाः छान्दसोदीर्घः देवा यथा इहाग्नि समीपे आगच्छतेषु तदर्थं मेषां देवानां चितिं अस्य यजमानस्य यज्ञं गच्छाम इत्येव रूपं जुहोमि सम्पादयामि केन साध-नेन समाहितेन मनसा हूयमानेनानेन घृतेन च एषां चितं सम्पादयामि । यत एवं तस्माद्विश्वस्याख्य सर्वस्य भुवनस्य पत्येति विश्वकर्मणे † सर्वदा विषय प्रकाशन मचितं इदमाज्यरूप हवि जुहोमीत्यर्थः ॥ ४२ ॥

उक्त होमानन्तरं पूर्णाहुतिं ‡ विधत्ते— "अथेति पूर्णा चासावाहुतिश्चेति § पूर्णाहुतिः आज्यपूर्णया स्रुचा सम्पाद्यमाना आहुति रित्यर्थः । सर्वं वा इति यत् पूर्णं तत् सर्वं अपरि-मितत्वात्, अतएवं सर्वेणैवानेन प्रीणाति ॥ ४३ ॥

"सप्त ते अग्न इत्यादिना ‖ तत् मन्त्रं व्याचष्टे—तत्र 'समिध'

---

* निघ० ३. १७. ८ ।

† 'विश्वकर्मणाय'—इति भ, ञ ।

‡ "पूर्णाहुतिश्च सप्त त इति । स्रुचा पूर्णाहुतिश्च जुहोति० पूर्णया स्रुचा आहुतिः पूर्णाहुति रिति ॥

—इति का० श्रौ० सू० १८. ४. ६, १० ।

§ पूर्णाचासावाग्निश्चेति'—इति ञ ।

‖ वा० सं० १७. ७६ ।

मित्यनेनास्य समिन्धने कृत्वा प्राणा विवक्षत इत्याह— "प्राणा वै समिध इति। प्रजापते र्विस्रंसनेन ततो निर्गता ऋषयः पृथगेव सप्तदेहानसृजत्। ततश्च तान् व्यवहारासमर्थान् दृष्ट्वा पश्चात् तानेकमेव पुरुष मकुर्वन्। एतत् सर्वं स प्रपञ्चं षष्ठकाण्डस्यादावभिहितम्। स एव प्रजापतिरियं नीयमानोऽग्निः अतोऽत्र जिह्वा-शब्देन * सप्त पुरुषा विवक्ष्यन्त इत्याह— "या न मुनिति तेषा मेतदाहेति तेषा मेतदभिधानं करोति तानाहेत्यर्थः। अत्र प्राण-शब्देन शरीरस्थानीन्द्रियाणि उच्यन्ते अतश्चैतेषां शब्दानामन्तरं इन्द्रियवाचकत्वेपि न साङ्कर्यम्। "सप्तधाम प्रियाणीत्यनेन छन्दांस्यभिधीयन्त इत्याह छन्दांसीति यत एत मग्निं होतृमैत्रावरुणादयाः सप्तहोत्रा अग्निष्टोमादिभेदेन सप्तधा यजन्ति। अत उच्यते सोऽर्थो मन्त्रेणेत्याह,— "सप्तहोत्रा इति स्थानवाचकत्वात् योनि-शब्दे चित्तयोऽभिधीयत इत्याह,— "चितीरेतदिति। घृतस्य रेतः सम हि हेतुत्वे चितोनाञ्च लोकात्मकत्वात् घृतेनेति वचनेन लोकेष्वेव रेतो निहितवान् भवतीत्याह,— "घृतेनेतीति। स्वाहाकारस्य यज्ञात्मकत्वात् स्वाहेत्युक्त्वा इद मुक्तं प्राणादिकं

---

* "सप्तजिह्वाः सन्ति ज्वालारूपाः सप्तजिह्वाः हिरण्याङ्गनाद्या आगमोक्ताः यद्वा आथर्वणिकोक्ताः काली कराली च मनोजवा च सुलोहिता च सधूम्रवर्णा स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वा।"

—इति मु० उ० १. २।

मर्वं युगपदेव यज्ञाहं करोतीत्याह,— "स्वाहेति। हे अग्ने! सप्तविधः पुरुषाः सप्त ऋषयः मरीच्यादयश्च तव द्रष्टारः सन्ति। तथा सप्त प्रियाणि धाम धामानि गायत्र्युष्णिगनुष्टुप्बृहतीति पङ्क्ति त्रिष्टुप् जगति एकाख्यानि छन्दांसि वसन्ति किञ्चत्वा होतृब्रह्ममित्रावरुणब्राह्मणाछंसिपोतृनेष्ट्राग्नीध्रो ऽच्छावाकाख्यां सप्तहोताश्च अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्र आप्तो-र्यामो वाजपेयश्चेति सप्तधा यजन्ति तादृश स्त्वं अस्माभिर्हूय-मानेन सप्तयोनी श्चितोरापूरयेति मन्त्रार्थः॥ ४४॥

मन्त्रे पौनःपुन्येन सप्तसंशब्द प्रयोगः कृत्स्नस्याग्नेस्तृप्तिहेतु र्भवतीत्याह,— "सप्तसप्तेति। प्रकृताहुतीनां त्रित्व मपि तथैव प्रशंसति— "तिस्र आहुतीरिति। समिधा माहुतीनाञ्च मिलिता षट्सङ्ख्या भवति। तस्य तु ब्राह्मणं प्रागुक्त मित्याह— "तिस्रः समिध इति॥ ४५॥

अथ समिदाहुतीनामस्थिमांसात्मकत्वात् तत् सन्निवेशानु-सारेण नास्तिष्टन्नासीनो जुहुयादित्याह,— "तिष्ठन्नित्यादिना। कठिनावयवसन्निवेशसाधारण्यात् समिधा मस्थित्वं तानि उच्छ्रितत्वात् तिष्ठन्तीव भवन्ति। अस्थि मांसानुसारेण समिधां अन्तरां आज्याहुतयस्तु बाह्याः कर्त्तव्या इत्याह,— "अन्तरा इति॥ ४६॥

अथास्याग्निप्रणयनात्मकस्य कर्मणः सम्पत्ति मभिधातुं प्रतिजानीते,— अथातः सम्पदेवेति। ता मेव दर्शयति,— "षट् पुरस्तादिना। प्रणयनात् पूर्वं तिस्र आज्याहुती स्तिस्रः

समिदाहुतीश्च जुहोति। अतस्तत्र षण्मन्त्रा भवन्ति यद्यपि द्वितीय तृतीय राज्याहुत्योः * षोडश मन्त्राः प्रयुज्यन्ते तथापि आहुत्यनुसारेण ते सर्वेऽपि द्वावेव मन्त्रा विति परिगण्येते। उपरिष्टादग्निनिधानात् पश्चात्तिस्रः समिदाहुतीस्तिस्र आज्याहुतीश्च जुहोतीति तेऽपि षण्मन्त्राः। आग्नीध्रमण्डपेऽपि कश्चित् पृश्निरश्मोपधीयते तात्पर्यं षड्भि र्मन्त्रै र्गच्छन्ति। अत्र यद्यपि पञ्चदिशो दैवीरित्यादयः पञ्चैव मन्त्रागमने विनियुक्ताः, तथापि उदुत्वेत्यादिना मन्त्रेण सहैते षड् भवन्ति, इति षसामपि मन्त्राणां गमनसाधनत्वाभिधानं गमनमन्त्रबाहुल्याभिप्रायम्। "विमान एष दिव" † इत्यादिभ्यां "पृश्नि मश्मान मुपदधाति ‡। "इन्द्रं विश्वा §" इत्यादिभिश्चतुर्भि र्मन्त्रैः "अग्नि" ‖ पर्यन्तं गच्छति। "क्रमध्व मग्निना ¶ इत्यादिभिः पञ्चभि र्मन्त्रैः चित्याग्नि मारोहन्ति। तदेव मेकोनत्रिंशत् मन्त्रा भवन्ति। एतदुक्तं मन्त्रसाध्य "आहुतिरेव त्रिंश्ञतमी' त्रिंशत् सङ्ख्या पूरणी यद्यपि आहुतीव्यक्तयो बहवः सन्ति तथापि सामान्यानुसारेण ताः सर्वा अपि एकैवाहुति

---

* "द्वितीयराज्याहुत्योः ( ! )" - इति क, ख, ग।

† इहैव पुरस्तात् पृ० १३५ पं०१ ; वा० मं० १७. ५६।

‡ वा० मं० १७. ६०।

§ वा० मं० १७. ६१।

‖ वा० मं० १७. ६५।

¶ वा० मं० १७. ६२।

भवति। "सुपर्णोऽसि गरुत्मान्" * इत्याभ्यां द्वाभ्या मग्निं निदधाति। "तद् द्वात्रिꣳशत्" सङ्ख्यायं सम्पद्यते, अनुष्टुप्द्वात्रिंशदक्षरो भवति। अतस्तदेतदाग्नि प्रणयनात्मकं मन्त्राहुति सङ्ख्याद्वारा अनुष्टुप् छन्दो भवन्ति; "मैवेति" ॥ ४७ ॥

स्विलिङ्गाच्च अनुष्टुबित्येतद्वितीय विशेषापेक्षां सप्तमकाण्डे गार्हपत्याचयनाभिधानानन्तरन् †। तत्र तिस्रोऽनुष्टुभः सम्पाद्य तासां मध्ये एका माहवनीयं प्रत्यग् भवन्तीत्युक्तम् ‡। अत्रोक्तप्रकारेणानुष्टुभः सम्पादने तास मेका § मनुष्टुभ मत्राहृतवन्तो भवन्तीत्याह,— "तया अमू मिति। गार्हपत्यात् खल्वग्निराहवनीय स्थानं प्रति प्रणीतो ऽतस्त्वाग्निप्रणयने विद्यमान मन्त्राहुति सङ्ख्याद्वारा त्यानुष्टुभः सम्पादनात् गार्हपत्ये सम्पादितानां मनुष्टुभा मेका मत्राहृतवन्तो भवन्तीत्युच्यते। गार्हपत्यादेकस्या अनुष्टुभोऽत्राहरणे प्रयोजन माह— "तद्यदेता मिति। अत्राग्निनयसरे 'एष सर्वोऽग्निः संस्कृतः' कार्त्स्न्येन संस्कृतः स एषोऽग्नि अत्र मत्स्यदभक्षयिष्यदिति यत् तस्मेनात्र मानीत् अन्नादनाय समर्थो नाभूदित्यर्थः ॥ ४८ ॥

पश्चात् स विल्याग्निः प्रणेष्यमाण मग्निं त्वया आगतेनात्र सहानीत्यब्रवीत्। तत स्तथेति, तेनाप्यङ्गीकृतं। तस्मा-

* वा० सं० १७. ७२ ।

† का० ७. १. २. १६ ।

‡ "प्रत्यक्सं तवंत्युक्तम्"—इति क, भ, ञ ।

§ "तासामेकामा"—इति ज ।

दस्मिन्नेवावसरे * एत मग्निं गार्हपत्यादव चित्याग्निाप.ह-रन्ति अनेन गार्हपत्यादनुष्टुभ आहरण मुक्तं। अथ पश्चादेषो-ऽन्नाय समर्थो भवति। "अलमाहुतिभ्यो" इति। तदेवान्नं दर्शितं आहुतिरूपायान्नाय समर्थो भवति अग्नि प्रणयनानन्तर मेवचित्याग्नेः आहुति सम्बन्धादिति भावः ॥ ४८ ॥

"अथो आहुरित्यादिकस्याय मर्थः,— किञ्चगार्हपत्यादनुष्टुभ आहरणेन चित्याग्नि रूपः प्रजापति रेव प्रीणाति ततोऽग्नि रूप मेतं 'प्रियं पुत्र मुरसि धत्ते" धारितवान् भवतीति ब्रह्मव दिन आहुः। अतोऽपि तस्मादनुष्टुभ माहरन्तीत्यर्थः। उक्तार्थ वेदनं प्रशंसति— "अथो हैतदिति। लोके यः कश्चिज्जनः एतदर्थरूपं एव मुक्तप्रकारेण जानाति स जनश्चैव मेव उरसि प्रियं पुत्रं आधत्ते खलु हेति निपातः प्रसिध्यर्थद्योतकः। व्यवहिता-श्चेत्यनुशासनात् पदान्तर व्यवहितोप्याङित्युपसर्गोधत्त इत्यनेन सम्बध्यते ॥ ५० ॥

अथ प्रकारान्तरेणापि गार्हपत्यादग्नेः आहरणं प्रशंसति — "यद्वेवैत मिति। अय मेवेति। योऽय मग्निः अधुनास्माभि-श्चीयते अय मेव चित्याग्निः सप्तानां पुरुषाणां समष्टिरूपः एक पुरुषः अथैषां पुरुषाणां यां 'श्रियं' परमं रूपं उर्द्धा 'समुदौहन्' समुदाक्षिपन् एषा सरूपा श्रीः सोऽग्निः पुरुष इति पुंल्लिङ्गं विधे आघ्रापेत्तं य मेत मग्निं इदानीं चित्याग्ना

* "तस्माद्यस्मिन्नवसरे"—इति क।

वाहरति इदानीं वाक्रियमाणो ऽग्निं समपुरुषाणां समुच्छ्रित्र श्रीरूप इत्यर्थः। तस्मात् कारणात् एत मग्नि मन्वाहरन्तीति यत तेन एतेषां सप्तानां पुरुषाणां श्रीरूपयोरसोऽस्तित मूर्द्ध मुच्छ्रिपन्ति किञ्च तस्याः श्रियः शिरोरूपत्वं तत्रैव षष्ठकाण्डे- ऽभिहितम्। तस्मात् तदेतच्छ्रीरूपोग्निरस्य प्रजापतिः शिरश्चितो- ऽय मग्निः पुनरात्मन शरीरं ( ! ) अत एते गार्हपत्यादग्नेः आहरणेन संस्कृतेन प्रजापतिशरीरे स्वकीयं शिर एव सम्बध्ना- तीत्यर्थः ॥ ५१ ॥ १ [ २, ३ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ २ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्त्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।

आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसाल्सिङ्गणार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

* अत्रत्याशीष्यन्यः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

अथ तृतीयाध्याये प्रथमं ब्राह्मणम् ।

---

अथातो व्वैश्वानरं जुहोति । अत्रैष सर्व्वो ऽग्निः संस्कृतः स ऽएषो ऽत्र व्वैश्वानरो देवता तस्मा ऽएतद्धविर्जुहोति तदेनꣳ हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते द्वादशकपालो द्वादश मासाः संव्वत्सरः संव्वत्सरो व्वैश्वानरः * ॥ १ ॥

यद्वेवैतं व्वैश्वानरं जुहोति । व्वैश्वानरं वा ऽएत मग्निं जनयिष्यन् भवति त मदः पुरस्ता-द्दीक्षणीयायाꣳ रेतो भूतꣳ सिञ्चति यादृग्वै योनौ रेतः सिच्यते तादृग् जायते तद्यत्तत्र व्वैश्वानरꣳ रेतो भूतꣳ सिञ्चति तस्मादय मिह व्वैश्वानरो जायत ऽउपाꣳशु तत्र भवति रेतो वै तत्र यत्र ऽउपाꣳशु वै रेतः सिच्यते निरुक्त ऽइह निरुक्तꣳ हि रेतो जातं भवति ॥ २ ॥

---

* 'वैश्वानरः'—इति ग, घ ।

स यः स वैश्वानरः । इमे स लोका इय मेव पृथिवी विश्व मग्निर्नरो ऽन्तरिक्ष मेव विश्वं वायुर्नरो द्यौरेव विश्व मादित्यो नरः ॥ ३ ॥

ते ये त ऽइमे लोकाः । इदं तच्छिर ऽइद मेव पृथिव्योषधयः श्मश्रूणि तदेतद्विश्वं वाग्निवाग्निः स नरः सोपरिष्टादस्य भवत्युपरिष्टाद्ध्यस्या ऽअग्निः* ॥ ॥ ४ ॥

इद मेवान्तरिक्षम् । तस्मादेतदलोमकमलोमक मिव ह्यन्तरिक्ष न्तदेतद्विश्व म्प्राण एव वायुः स नरः स मध्येनास्य भवति मध्येन ह्यन्तरिक्षस्य वायुः † ॥ ५ ॥

शिर ऽएव द्यौः ‡ । नक्षत्राणि केशास्तदेतद्विश्वं चक्षुरेवादित्यः स नरस्तदवस्ताच्छीर्ष्णो भवत्यवस्ताद्धि दिव ऽआदित्यस्तदस्यैतच्छिरो वैश्वानर ऽआत्माय

---

* 'अग्निः'—इति घ, ङ ।

† 'वायु'—इति ग, घ ।

‡ 'द्यौ' - इति ग, घ ।

मग्निश्चित ऽआत्मान मेवास्यैतत् संस्कृत्य शिरः प्रति-
दधाति * ॥ ६ ॥

अथ मारुतान् जुहोति। प्राणा वै मारुताः
प्राणानेवास्मिन्नेतद्दधाति व्वैश्वानरꣳ हुत्वा शिरो
वै व्वैश्वानरः शीर्षंस्तत् प्राणान् दधाति † ॥ ७ ॥

एक ऽएष भवति ‡। एक मिव हि शिरः सप्ते-
तरे सप्तकपाला यद् वा ऽअपि बहु कृत्वः सप्त-
सप्त सप्तैव तच्छीर्षण्येव तत् सप्त प्राणान् दधाति ॥
॥ ८ ॥

निरुक्त ऽएष भवति। निरुक्त मिव हि शिरो
ऽनिरुक्ता ऽइतरे ऽनिरुक्ता ऽइव हि प्राणास्तिष्ठन्नेतं
जुहोति तिष्ठतीव हि शिर ऽआसीन ऽइतरानासत-
ऽइव हि प्राणाः § ॥ ९ ॥

---

* 'प्रतिदधाति'—इति ख।

† 'दधाति'—इति ख।

‡ 'एक ऽएव भवति'—इति ख।

§ 'प्राणाः'—इति ग, घ।

तद्यौ प्रथमौ मारुतौ जुहोति । इमौ तौ प्राणौ तौ मध्ये वैश्वानरस्य जुहोति मध्ये हीमौ शीर्ष्णः प्राणौ * ॥ १० ॥

अथ यौ द्वितीयौ । इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतर मिव हीमौ प्राणौ † ॥ ॥ ११ ॥

अथ यौ तृतीयौ । इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतर मिव हीमौ प्राणौ वागेवारण्येऽनूच्यः सो ऽरण्ये ऽनूच्यो भवति बहु हि वाचा घोरं निगच्छति ‡ ॥ १२ ॥

यद्देव वैश्वानर मारुतान् जुहोति । क्षत्रं वै वैश्वानरो विशमारुताः क्षत्रं च तद्विशञ्च करोति वैश्वानरं पूर्व्वं जुहोति क्षत्रं तत् कृत्वा विशं करोति § ॥ १३ ॥

एक ऽएष भवति । एकस्थं तत् क्षत्र मेक-

---

*, † 'प्राणौ'—इति ग, घ । ‡ "नियच्छति" Sáyaṇa—इति च ।

§ 'करोाति'—इति ख ।

स्याꣳ श्रियं करोति बह्वव इतरे व्विशि तद्-भूमानं दधाति ॥ १४ ॥

निरुक्त ऽएष भवति। निरुक्त मिव हि क्षत्र मनिरुक्ता इतरे ऽनिरुक्तेव हि व्विट् तिष्ठन्नेतं जुहोति तिष्ठतीव हि क्षत्र मासीन ऽइतरानास्त ऽइव हि व्विट् * ॥ १५ ॥

तं वा ऽएतम्। पुरोऽनुवाक्यवन्तं याज्यवन्तं व्वषट्कृते स्रुचा जुहोति हस्तेनैवेतरानासीनः स्वाहा-कारेण क्षत्रायैव तद्विशं कृतानुकरा † मनुवर्त्मानं करोति ॥ १६ ॥

तदाहुः। कथ मस्यैते पुरो ऽनुवाक्यवन्तो याज्यवन्तो व्वषट्कृते स्रुचा हुता भवन्तीत्येतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि सा त्रिपदा गायत्री पुरो ऽनुवाक्याथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब्याज्येद मेव ‡

---

* 'विट्'—इति ग। † 'कृतानुवाका'—इति ङ।

‡ "इयमेव कपुष्णा०"—Sáyaṇa—इति च।

कपुच्छलमयं * दण्डः स्वाहाकारो व्वषट्कार एव मु ह्यास्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो व्वषट्कृते स्रुचा हुता भवन्ति ॥ १७ ॥

तद्यं प्रथमं दक्षिणतो मारुतं जुहोति। याः सप्त प्राच्यः स्रवन्ति ताः स स सप्तकपालो भवति सप्त हि ता याः प्राच्यः स्रवन्ति ॥ १८ ॥

अथ यं प्रथम मुत्तरतो जुहोति। ऋतवः स स सप्तकपालो भवति सप्त ह्यृतवः † ॥ १९ ॥

अथ यं द्वितीयं दक्षिणतो जुहोति। पशवः स स सप्तकपालो भवति सप्त हि ग्राम्याः पशवस्त मनन्तर्हितं पूर्व्वस्माज्जुहोत्यप्सु तत् पशून् प्रतिष्ठापयति ‡ ॥ २० ॥

अथ यं द्वितीय मुत्तरतो जुहोति। सप्त ऽऋषयः स स सप्तकपालो भवति सप्त हि सप्त ऽर्षय-

---

* "कपुत्सलमयं"—इति ङ, च।

† 'ह्यृतवः'—इति क, 'ह्यृतवः'—इति ख, ग; ह्यृतवः'—इति ङ।

‡ 'प्रतिस्थापयति'—इति ख।

स्त मनन्तर्हितं पूर्व्वस्माज्जुहोत्यृतुषु तदृषीन् प्रतिष्ठापयति * ॥ २१ ॥

अथ यं तृतीयं दक्षिणतो जुहोति। प्राणाः स स सप्तकपालो भवति सप्त हि शीर्षन् प्राणास्त मनन्तर्हितं पूर्व्वस्माज्जुहोत्यनन्तर्हितांस्तच्छीर्ष्णः प्राणान् दधाति ॥ २२ ॥

अथ यं तृतीय मुत्तरतो जुहोति। छन्दाꣳसि स स सप्तकपालो भवति सप्त हि चतुरुत्तराणि छन्दाꣳसि त मनन्तर्हितं पूर्व्वस्माज्जुहोत्यनन्तर्हितानि तदृषिभ्यश्छन्दाꣳसि दधाति ॥ २३ ॥

अथ याः सप्त प्रतीच्यः स्रवन्ति। सो ऽरण्ये ऽनूच्यः स सप्तकपालो भवति सप्त हि ता याः प्रतीच्यः स्रवन्ति सोऽस्यैषो ऽवाङ् प्राण ऽएतस्य प्रजापतेः सो ऽरण्ये ऽनूच्यो भवति तिर इव तद्यदरण्यं तिर इव तद्यदवाङ् प्राणास्तस्माद्य ऽएतासा न्नदीनां

* 'प्रतिष्ठापयति'- इति ख ।

पिबन्ति रिप्रतराः शपनतरा* ऽआहनस्यवादितरा भवन्ति तद्यद्येतदाहेदं मारुता इति तदस्मा ऽअन्नं कृत्वापिदधाति तेनैनं प्रीणाति ॥ २४ ॥

स यः स वैश्वानरः†। असौ स ऽआदित्योऽथ ये ते मारुता रश्मयस्ते ते सप्त सप्तकपाला भवन्ति सप्त-सप्त हि मारुता गणाः‡ ॥ २५ ॥

स जुहोति। शुक्रज्योतिश्च चित्रज्योतिश्च सत्य-ज्योतिश्च ज्योतिष्मांश्चेति नामान्येषा मेतानि मण्डल मेवैतत् संस्कृत्याथास्मिन्नेतान् रश्मीन्ना मग्राहं प्रतिदधाति ॥ २६ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् [३. १.] ॥

---

* "प्राफनतरा" Sáyaṇa (?)—इति च।

† 'वैश्वानरो। ऽसौ'—इति ग, 'वैश्वानरः'—इति घ।

‡ 'गणाः'—इति क, 'गणाः'—इति ग।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्म्ममे , त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पूर्वस्मिन्नध्याये स्वयमातृण्णाया व्याघारणसमुच्चणादि कर्म्माभिहितम्। अथास्मिन्नध्याये वैश्वानर मारुतवसोर्धारादिहोमलक्षणं कर्माभिधास्यते। (तत्रादौ वैश्वानरहोमं विधत्ते—"अथात इति। 'अथ'-शब्देनाग्नि प्रणयनानन्तर्यं द्योतते, अत इति। अत्रैष सर्वोऽग्निरित्याद्युत्तरकाल प्रतिपाद्य मर्थं हेतुतया परामृशति। 'वैश्वानर'-शब्दस्तद्देवत्यं हविराचष्टे यतोऽस्मिन्नवसरे अग्निर्वैश्वानरो देवता भवति। अतस्तत् प्रीणनार्थं तद्देवत्यं हविर्जुहुयादित्यर्थः। न केवल मनेनास्मै भागसम्पादनं क्रियते, अपि तु देवतात्वं सम्पादन मपीत्याह ,— "तदेन मिति। तदेव मुपपादयति ,— " यस्मै वा इति। वैश्वानरं जुहोति सामान्येनाभिधानादिक मपि तच्छब्देनोपायेत्यदीत (!) आह )*— "द्वादश कपाल इति। द्वादशसु कपालेषु संस्कृतः पुरोडाशो † द्वादशकपालः द्वादशमासाः सम्भूय संवत्सरो भवति। वैश्वानरोऽग्निश्च संवत्सरात्मकं तत स्तदर्थं हविर्द्वादशकपालसंस्कृतः पुरोडाशो भवतीत्यर्थः॥ १ ॥

---

* बन्धनीचिह्नान्तः पाठो नास्ति ज-पुस्तकादन्यत्र।

† "पुरोऽनुवाक्याः॥"— इति भ, ण ।

अथ पुनस्त मेव वैश्वानरहोमं प्रशंसति— "यद्देवैत मिति। अदःशब्दो दीक्षणीयेष्टिकालं परामृशति। 'पुरस्ताद्' इति पूर्वकाल मात्र माचष्टे" पूर्व ममुष्मिन् काले दीक्षणीयेष्ट्यान्तं वैश्वानरं रेतोभूतं सिञ्चतीति यत् अतएव मग्निः वैश्वानररूपं जनयिष्यन् भवति दीक्षणीयायां क्रतो वैश्वानरार्थो होमः एतस्याग्ने वैश्वानररूपेणोत्पादनार्थं रेतः सेचनवान् भवतीत्यर्थः। लोके हि योनौ यत् प्रकार विशिष्टं रेतः सिच्यते उत्पत्तिकाले तत् प्रकार वैशिष्ट्ये नैव तज्जायते। न पुनः प्रकारान्तरवैशिष्ट्येन दीक्षणीयायां वैश्वानरं रेतोरूपेण सिक्तवानिति यत् तस्मादय मग्निरिहापि तदनुरोधेन वैश्वानर एव जायते अतश्च वैश्वानररूपेणोत्पादनाय वैश्वानरदेवत्यं हविर्जुहुयादिति * भावः। "उपांशु तत्र भवतीत्यादिकस्याय मर्थः,— यज्ञशब्देन यष्टव्यत्वात् वैश्वानर उच्यते। तत्र दीक्षणीयायां यज्ञो रेतो रूपो भवति। खलु रेतश्च उपांशुरहस्येव सिच्यतेन प्रकाशं, अतस्तत्र प्रधान उपांशु भवति। इह तु प्रधानं निरुक्तं उच्चैरेवेष्टं भवति। जननावस्थायां रेतसः प्रकाश मेव जायमानत्वादत्रत्यस्य वैश्वानरस्य तथा विधत्वादिति॥ २॥

अथास्य वैश्वनरात्मकता माह—"स य इत्यादिना। अपूर्वोक्तो यो वैश्वानराग्निसहैवे मे पृथिव्यादयो लोकाः कुतः, इय मेव

---

* "हविर्जुह्रुरिति"—इति ज।

'पृथिवी विश्वं' तदधिष्ठाता 'अग्नि' रेव 'नरः'। तथा 'अन्तरिक्ष मेव विश्वं' तदधिष्ठाता 'वायुर्नरः'; एवं 'द्यौरेव विश्वं' तदधिष्ठाता 'आदित्यो नरः'। पृथिव्यादीनां लोकाना मेकपदार्थाधारत्वेन विश्वं अग्न्यादीनां तु तदधिष्ठातृपुरुषत्वम्। एवञ्च वैश्वानर इत्यत्र तदितरस्य स्वार्थिकत्वात् साधिष्ठातृका इमे लोका एव स वैश्वानर इत्यर्थः ॥ ३ ॥

अथ शिरसो वैश्वानररूप लोकात्मकता माह,— "ते य इति। इद मिति मुखं श्मश्रुविशिष्टं हस्तेन प्रदर्शने *। इद मेव स्थानं पृथिवी शिरसि अभागत्वात् अत्रत्यानि श्मश्रूण्येवौषधयः तदेतद्विश्व मिति शिरसि दर्शितायाः पृथिव्या वैश्वानरात्मकत्त्व मुक्तं, 'वाक्' इति तत् स्थान मुच्यते। अतश्च। वाक् चिबुकयोरौत्तराधर्येणोक्तं वैश्वानरत्व मुपपादयति सोपरिष्टादिति ॥ ४ ॥

इद मिति मुखादुपरितनं हनुनत्रनासिकाललाटस्थानं निर्दिश्यते अलोमकमिव ह्यन्तरिक्ष मिति। तत्र पृथिवीवत् महीधरो महीरुहादीनामभावादित्यर्थः। "स मध्येनास्येति। 'वायुरन्तरिक्षस्य' 'मध्येन' मध्यप्रदेशेन वर्त्तत इति। स प्राणोऽस्य निर्दिष्टप्रदेशस्य मध्येन वर्त्तते ॥ ५ ॥

"शिर एवेति। अत्र 'शिरः' शब्देन ललाटादुपरितनं केशोद्गमस्थान मुच्यते, इदं तच्छिर इत्यत्र गलादुपरितनं सर्वं

---

* 'प्रदर्शिते'—इति ज, झ; 'प्रदर्श्यते'—इति छ, ञ।

मपि शिरसा प्रसिद्धेन * त्रिवक्षितम्। अन्यथा पूर्वोक्तस्यानुपपत्तेः। "तस्यैतदिति। यत एवं तस्माद्वैश्वानरोऽस्य प्रजापते रेतद्रूपप्रकारं शिरः चितोऽय मग्निस्तु शरीरं, अत एतेन होमेनास्यात्मनि संस्कृता तत्र शिरः सम्बध्नातीत्यर्थः॥ ६॥

वैश्वानरयागानन्तरं मारुतानां होमं विधाय तान् प्राणात्मना ( प्रशंसति,— "अथेति। तद्धोमस्य वैश्वानरः सम्बध्नातीत्यर्थः॥ ७॥

वैश्वानरयागानन्तरं मारुतानां होमं विधाय तान् प्राणात्मकत्वात् ) † तेषां तदनुविधायिनीं सङ्ख्या माह— "एक एष इति। 'इतरे' मारुताः पुरोडाशः सप्तसु कपालेषु संस्कृताः सप्त भवेयुः बहुत्वोऽपि सप्तसप्तेति यदस्ति एतत् सप्तैव। यद्यपि सप्तानां कपालसप्तकानां मिलिता सङ्ख्या एकोनपञ्चाशद् भवति मारुतां तावत् सङ्ख्याकत्वात् तथापि सप्तधा भागेन ते सप्तैव भवन्ति। अतस्तेते शिरस्येव सप्तप्राणान्दध्याति॥ ८॥

अथ तदेव ‡ प्राणत्व मुपजीव्य तेषा मुपांशुयागादिक माह— "निरुक्त एष भवति। 'एष' वैश्वानरः 'निरुक्तः' व्यक्तः उच्चै र्योगो भवति शिरसो व्यक्तत्वात् 'इतरे' मारुता 'अनिरुक्ता' अव्यक्ता उपांशुयागा भवेयुः। प्राणानामतीन्द्रियत्वेना-

---

* "ह्रसीह्रन"—इति क, भ, ज।

† बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति भ-ज-पुस्तकयोरन्यत्र।

‡ 'यदेव'—इति ज।

व्यक्तत्वादित्यर्थः । "तिष्ठतीव होति । शिर उच्छ्रितत्वात्तिष्ठतीव भवति । इन्द्रियाणि तु आनयत्येनासीनासतेव (?)* भवन्ति ॥ ८ ॥

अत इन्द्रयो मारुतानां होम मनूच्य तेषां तत्र इन्द्रीभूत प्राणात्मकता प्रदर्शनेन होमे स्थानप्रकार माह— "तद्यौ प्रथमावित्यादिना । अत्र प्रथम सन्निधानेन द्वितीये उपचारात् प्रथमयोग एव मुत्तरत्र द्वितीयं तृतीयादित्यत्रापि "इमौ ता विति । तौ प्रथमौ इमौ प्राणौ इमौ प्राणयो र्हस्तेन निर्द्देशः । तौ वैश्वानरस्य पुरोडाशस्य मध्ये जुहोति । अनयोः श्रोत्रयोः शिरोमध्येऽवस्थानात् । अतएव कात्यायनेन सूचितम् ,— "वैश्वानरे वा वैश्वानरं पृथुं" कृत्वेति ; 'अग्नि वा' वैश्वानरेवेति † विकल्पः । तत्र मन्त्रो होमः शाखान्तरानुसारेण विकल्पितः । वैश्वानरे यदा होमः तदा वैश्वानरस्य पृथक् करणम् ॥ १० ॥

'अथ यौ द्वितीया विमौ ता विति । इमाविति चक्षुषो निर्द्देशः । 'तौ समन्तिकतरं' सन्निहिततरे जुहुयात् , चक्षुषोः परस्परसन्निधानेनावस्थानात् , होमस्तु वैश्वानरस्य पश्चाद् भागे कर्त्तव्यः । पञ्चषष्ठयोः होमः तृतीयचतुर्थयोः पश्चात् सप्तमस्य तु होमः सर्वेषां पश्चात् क्रियते ; अतएव कात्यायनः ,— "वैश्वानर

---

* "आनयत्येनासीनासीनानी"—इति ज ; "आसताच्छतनाम्नानानीग्रीवा"—इति झ ; "आसतापूतनाम्नानानीग्रीवा"—इति ञ ।

† वैश्वानरे वा वैश्वानरं पृथुंकृत्वा 'शुक्रज्योति' रिति ( वा० सं १७. ८०—८५ ) प्रतिमन्त्रम् । मारुतान् जुहोति • विकल्पश्चायम् वैश्वानरे होमोऽग्नौवोति"—इति का० श्रौ० सू० १८. ४. २३, २४ ।

मधिश्रित्य दक्षिणोत्तरौ मारुतौ ० पश्चाच्च सङ्कृष्टतरौ ० एव मपरौ ० पश्चादरण्येऽनूच्यम् । इमामासादनयोश्च”-इति* वैश्वानर-मारुताना मेकतत्वात् “वैश्वानर मधिश्रित्य दक्षिणोत्तरौ मारुतौ” इत्युक्तम् । तत् प्रयोगप्रकारस्तु सूत्रतोऽवगन्तव्यः ॥ ११ ॥

“अथ यौ तृतीया विमौ ताविल्यनेमाविति मासाविवरयो र्निर्देशः । इत्थं पश्चां मारुतानां न तत् प्रमाणात्मकता मभि-धारण्येऽनूच्यं वागात्मना प्रशंसति,— “वागेवेति । ‘अरण्ये-ऽनूच्यः’ कश्चिदनुवाकः तेन हूयमानोऽपि पुरोडाशो ‘ऽरण्ये-नूच्यो’ भवतीत्यादि वातस्य वागात्मकता मेवोपपादयति † । यतः कारणाद् ‘वाचा बहु घोरं निगच्छति’ अतो प्रकाश्यत्वेन सोऽनुवाकोरण्येनुवक्तव्ये भवति । तस्मादरण्येऽनूच्यवचनात् तस्य वागात्मकत्व मुपपन्न मिति भावः ॥ १२ ॥

पूर्वं वैश्वानरं शिरोरूपेण मारुतान् स्तुत तत् प्राणस्तुतवान्, इदानीन्तु त मेव वैश्वानर मारुताम् क्षत्रं प्रजात्मना स्तौति— “यद्वेवेति । वैश्वानरस्य प्रजात्मकत्वेन सर्वतः प्राधान्यात् क्षत्र-त्वम् । मरुतां प्रजात्वम् तैत्तिरीयके श्रूयते— “मरुतो देवानां विश”-इति ‡ ॥ १३ ॥

अथ तेषा मुक्त मेव क्षत्रं प्रजात्मकत्व मुपजीव्य तत् सङ्ख्यादिकं प्रशंसति— “एक एव भवतीति । वैश्वानरस्यैकत्वेन

---

* का० श्रौ० सू० १८. ४. १७—२१ ।

† अरण्येऽनूच्यो भवतीत्यादिना तस्य वागात्मना प्रशंसति—इति क-ख ।

‡ तै० सं० २. २. ५. ७ ।

तत्र जातिसम्बन्धनं प्राधान्य 'मेकस्य' मेव करोति। अतएव 'श्रिय मेव करोति'; अतएव 'श्रिय' मपि एकस्यां करोति, बहु क्षत्रप्राधान्ये परस्पर मेक मत्यात् राष्ट्रविप्लव प्रसङ्गात् मारुतानां बहुत्वेन प्रजाया मेव 'भूमानं' बहुत्वेन प्रजाया मेव 'भूमानं' बहुत्वं निदधाति। प्रजावन्तो क्षत्रवान् भवति। "भूमान मिति। "बहोर्लोपो भू च बहोः"-इति बहु शब्दा-द्विहितस्ये मनि च इकारस्य लोपः। प्रकृतेश्च भू इत्यय मादेशः॥ १४ ॥

'निरुक्त मिव हि क्षत्रम्'-इति स्वाहाचया सर्वां प्रजा-क्षम्योश्चैवंक्रव्यमानत्वेन क्षत्रस्य निरुक्तत्वम्। प्रजायास्तु तदा-याधीनत्वाञ्चेष्टतेरनिरुक्तत्वम्। अतएव 'क्षत्रं तिष्ठतीव भवति। प्रजात्वासीनेव भवति॥ १५ ॥

वैश्वानरं जुहोति मारुतां जुहोतीति * होम मात्र विधा-नात्तत्र विशेषं विधाय प्रशंसति— "तं वा ऽएत मिति। "पुरोऽनुवाक्यवन्तं याज्यवन्तम् †"-इति छान्दसो ह्रस्वः। त मेतं वैश्वानरं कीदृशं पुरोऽनुवाक्यवन्तं याज्यावन्तं होतावषट्-कृतं जुह्वा जुहुयात्। इतरान्मारुतान् आसीनो हस्तेन स्वाहा-कारेणैव जुहुयात्। एवञ्च वैश्वानरस्य पुरोऽनुवाक्यासम्ब-न्धिनि बन्धनेन यागत्वेन प्राधान्यादितरेषान्तु तद् वैलक्षण्येनो-

---

* "वैश्वानरो यजतिः मारुता जुहोतयः • तत् कथं वैश्वानरं हि प्रसङ्ख्याह०"—इति का० श्रौ० सू० १८. ४. १७ क।

† का० श्रौ० सू० १८. ४. १७ ख।

सर्ज्जनत्वात् प्रजां च भाय कृतानुकारिणी मनुगतवर्त्तमानञ्च करोति ॥ १६ ॥

अथ मारुताना मुक्तप्रकारेण होमेन वैश्वानरवद्यागसम्पत्ति र्घटत इति। सा सम्पत्ति कथं भवतीति प्रश्न पूर्वकोत्तरोदर्शयति,- "तदाहु रिति। एतेषां वै सप्तपदाना मित्यत्र मारुत-शब्देन तद्धोमसाधनभूता: "शुक्रज्योतिश्चेत्यादयो मन्त्रा * विवक्ष्यन्ते ते च सप्तपदा भवन्ति। अतश्च तेषां मन्त्राणां यानि प्रथमानि त्रीणि पदानि सन्ति सा त्रिपदा गायत्री मेव पुरोऽनुवाक्या भवति। अथ यानि चत्वार्य्युपरितनानि पदानि सन्ति तानि चतुष्पदा त्रैष्टुप् सैव याज्या भवति। "इद मेवेति † प्रसृतिरभिनयेन प्रदर्श्यते,— कपुच्छलम् ‡ इति वक्तुमुख § मुच्यते। अय मिति बाहु 'दण्ड:' प्रदर्श्यते एवं बाहुरेव स्रुगित्युक्तं भवति। 'स्वाहाकार' एव 'वषट्कारो' भवति। इत्थ मुक्तेन प्रकारेणास्याग्नेर्यजमानस्य वा सम्बन्धिन एव मारुतां 'पुरोऽनुवाक्या याज्यावन्तो वषट् कृते स्रुचा हुता भवन्ति ॥ १७ ॥

अथ होमक्रमेण तान् मारुतान् प्रत्येकं नद्यादिरूपेण प्रशंसति— "नद्यं प्रथम मिति। 'प्राच्य:' प्राङ्मुखा: पूर्वसमुद्रगामिन्यो गङ्गायमुनादय: सप्तनद्य: 'स्रवन्ति ता: सप्त

---

* वा० सं० १७. ८०—८५।

† 'इय मेवेति'—इति ज, झ, ञ; 'इय मेव चिति!'—इति छ।

‡ "कपुच्छला मेव!"—इति छ।

§ [illegible]

प्रथमं दक्षिणतो दक्षिणभागे हुतो मारुतः पुरोडाशः सप्तसु कपालेषु संस्कृतो भवति। 'याः' नद्यः 'प्राच्यः' 'स्रवन्ति' तासां सप्तत्वात् ॥ १८ ॥

अनेन तस्य मारुतपदोक्तसङ्ख्या नद्यात्मकत्वं समर्थ्यते। उत्तरत्र सर्वत्राप्येव मेव मधिम सापेक्षया सप्त हि 'ऋतव' इत्युक्तम्' ॥ १९ ॥

"त मनन्तर्हित मिति तं द्वितीयं पुरोडाशं पूर्वस्मान् मारुतादनं तर्हि त मव्यवहितं तत् सम्बन्धे जुहुयात्। एवं पूर्वस्यावात्मकत्वादप्स्वेव पशून्' प्रतिष्ठापयति ॥ २०, २१ ॥

"अनन्तर्हितांस्तच्छीर्ष्णः प्राणान् दधातीति। पूर्व मारुतपुरोडाशस्य प्रथम मारुतेन सम्बन्धात्तस्य च वैश्वानरेण सम्बन्धात् प्राणान् शिरसोऽनन्तर्हिता नव्यवहितान् करोतीत्यर्थः ॥ २२ ॥

"सप्त हि चतुरुत्तराणीति। चतुरक्षराधिकानि 'छन्दांसि' भवन्ति, यद्यवान्तराः छन्दो बहवः सन्ति; तथापि चतुरक्षराधिकानि छन्दांसि सप्तैवेत्यर्थः। गायत्री चतुर्विंशत्यक्षरा, उष्णिक् पुनरष्टाविंशत्यक्षरा, अनुष्टुप् द्वात्रिंशत्यक्षरा, एवं बृहती-पङ्क्ति-त्रिष्टुप्-जगत्यश्चतुरक्षराधिका भवन्ति ॥ २३ ॥

"सोऽस्यैष इत्यादिकण्डिकाय मर्थः,—'स' एषो 'ऽरण्येनूच्यो' गणः 'अस्य अवाङ्' अधस्तनः 'प्राण' इन्द्रियं अस्येति पदस्यैवार्थं विवृणोति। 'ऽएतस्य प्रजापतेः'—इति तरुगुल्मादि भूयिष्ठत्वेन प्रकाशकत्वाद् 'अरण्य' 'मिर' रोहितं भवति। 'अवाङ्प्राणो' ष्यादितो

भवति। अनेन तस्योक्तं 'अवाङ्प्राणत्वं' समर्थितम्। 'तस्मात्' तदात्मिकाना मेतासां 'नदीनां' कर्मणी षष्ठी नदी ये पिबन्ति'। अथवा पय इत्यध्याहार्यं तासां पयो ये 'पिबन्ति' 'ते' 'रिप्रतरा:' प्र मिति पाप मुच्यते। पापिष्ठा: 'ग्रपन' मिति। व्यत्ययेन पकारस्य फकार: * ध्रुव:। अत्यर्थं मुपालम्भनीया:। 'आहन' मिति नीचोक्ति मुच्यते † तस्मा अत्यर्थं वादितारो भवन्ति' इति मूत्र रूपत्वात्तासां नदीनां पय: पिबन्तो 'इतरा' ‡ नीचा भवन्तीत्यर्थ:। अथ 'मारुता इति' अभिधानेन द्रव्यदेवतासम्बन्ध प्रतीते: 'अन्नं' सम्पाद्य 'अस्मै' प्रजापतये प्रतिपादयेति। तेन' च 'एनं' 'प्रीणाति'-इत्याह,— "तद्यदेतदिति ॥ २४ ॥

अथ वैश्वानरं आदित्यरूपेण मारुतारश्मिरूपेण प्रशंसति,— "स य: स वैश्वानर इति। 'ते' च मारुता' मरुद्गण सङ्ख्यानुसारेण तत् पुरोडाशा: 'सप्त सप्तकपाला भवेयु ( रित्याह। 'ते सप्त सप्तकपाला' इति 'सप्त सप्त हि' इति 'मारुता गणा' सप्त सप्तकानि भवन्ति। एकोनपञ्चाशत्सङ्ख्यका मरुत: सप्तविधा विभागेन सप्त समुदाया भवन्ति। अतस्तत्सङ्ख्यानुसारेण तत् पुरोडाशा: 'सप्त सप्तकपाला' भवेयु: ) §। ननु च पूर्व मेव सप्तैतरे सप्तकपाला इति अत्र ते नाय मेवार्थोभिहित:, किं मिति स

---

* "पकारस्य फकाध्रुव: ( ! )"—इति क, ञ, भ, ञ।

† "आर्चोक्तिमुच्यते ( ! ? )"—इति क।

‡ 'नितरा ( ! )'—इति क ञ भ, ञ।

§ बन्धनचिह्नाक्त: प्रदर्शित: पाठो नास्ति भ-ञ-पुस्तकयोरत्र।

एवात्रोच्यत इति नैतदस्ति पूर्वं यद्‌ वा अपि बहु कृत्व इत्यादिना सप्तधा विभागेन ते सर्वे सप्तैव भवन्तीति। शिरसि सप्त प्राणान्निदधातीत्युक्तम्। ननु सप्तकपालानां सप्तत्वे कारण मुक्तम्। अत्र पुनस्तत्र कारण मुक्तम्। अत्र पुन स्तत्र कारण मुच्यते इति ॥ २५ ॥

अथ मारुतानां होमे मन्त्रान् दर्शयति,— “स जुहोति। “शुक्रज्योति * रिति सत्यज्योतिश्च ज्योतिष्मांश्चेत्यादिकै र्मन्त्रै रित्यर्थः। “नामान्येषा मिति। एतानि ‘शुक्रज्योति’ रित्यादीनि येषां रश्मीनां नामानि वैश्वानरस्यादित्यात्मकत्वं मारुतानां रश्म्यात्मकत्वं प्रागुक्तम्। अतश्चैव ते नामाभिर्होमै रादित्य मेव ‘संस्कृत्याथास्मिन् मण्डले’ एतानुक्तनाम्नो रश्मीनावस्थापयति ॥ २६ ॥ ३ [ ३, १ ]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ॥

---

* वा० सं० १७. ८०—८५।



अथातो वसोर्द्धारां जुहोति। अत्रैष सर्व्वोऽग्निः संस्कृतः स एषोऽत्र वसुस्तस्मै देवा एतां धारां प्राग्रहृंस्तयैनं प्राीणांस्तद्यदेतस्मै वसव एतां धारां प्रागृह्णंस्तस्मादेनां वसोर्द्धारेत्याचक्षते तथै-वास्मा अय मेतां धारां प्रगृह्णाति तयैनं प्रीणाति ॥ ॥ १ ॥

यद्वेवैतां वसोर्द्धारां जुहोति। अभिषेक एवा-स्यैष एतद्वा एनं देवाः सर्व्वं कृत्स्नꣳ संस्कृत्या-थैन मेतैः कामैरभ्यषिञ्चन्नेतया वसोर्द्धारया तथै-वैन मय मेतत् सर्व्वं कृत्स्नꣳ संस्कृत्याथैन मेतैः कामैरभिषिञ्चत्येतया वसोर्द्धारयाज्येन पञ्चगृहीते-नौदुम्बर्या स्रुचा तस्योक्तो बन्धुः ॥ २ ॥

वैश्वानरꣳ हुत्वा। शिरो वै वैश्वानरः शीर्ष्णो वा अन्न मद्यतेऽथो शीर्षतो वा अभि-षिच्यमानोऽभिषिच्यते मारुतान् हुत्वा प्राणा वै

मारुताः प्राणैर्वा ऽअन्न मदन्ते ऽथो प्राणेषु वा ऽअभिषिच्यमानो ऽभिषिच्यते * ॥ ३ ॥

तद्वा ऽअरण्ये ऽनूच्ये। व्वाग्वा ऽअरण्ये ऽनूच्यो व्वाचो वा ऽअन्न मदन्ते ऽथो व्वाचा वा ऽअभिषिच्यमानो ऽभिषिच्यते तदेतत् सर्व्वं व्वसु सर्व्वे ह्येते कामाः सैषा व्वसुमयी धारा यथा क्षीरस्य वा सर्पिषो व्वैवं मारम्भायैवेय माज्याहुतिर्हूयते तद्यदेषा व्वसुमयी धारा तस्मादेनां व्वसोर्द्धारेत्याचक्षते ॥ ४ ॥

स ऽआह। इदं च म ऽइदं च म ऽइत्यनेन च त्वा प्रीणाम्यनेन चानेन च त्वाभिषिञ्चाम्यनेन चेत्येतद्यथा ऽवूद च मे देहीदं च म ऽइति सा यद्वैवैषा धाराग्निं प्राप्नुयाद्यथैतद्यजुः प्रतिपद्येत† ॥ ॥ ५ ॥

एतद्वा ऽएनं देवाः। एतेनान्नेन प्रीत्वैतैः

* 'अभिषिच्यते' इति ङ।

† 'प्रतिपद्यत'—इति क।

कामैरभिषिच्यैतया व्वसोर्द्धारयाथैन मेतान् कामा-
नयाचन्त तेभ्य इष्टः प्रीतो ऽभिषिक्त एतान् कामान्
प्रायच्छत्तथैवैन मय मेतदेतेनान्नेन प्रीत्वैतैः कामै-
रभिषिच्यैतया व्वसोर्द्धारयाथैन मेतान् कामान्या-
चते तस्मा ऽइष्टः प्रीतोऽभिषिक्त ऽएतान् कामान्
प्रयच्छति द्वौ द्वौ कामौ संयुनक्त्यव्यवच्छेदाय यथा
व्योकसौ संयुञ्ज्यादेवं यज्ञेन कल्पन्ता मिति* ॥ ६ ॥

एतद्वै देवा अब्रुवन्। केनेमान् कामान् प्रति-
ग्रहीष्याम ऽइत्यात्मनैवेत्यब्रुवन्यज्ञो वै देवाना मात्मा
यज्ञ ऽउ ऽएव यजमानस्य स यदाह यज्ञेन कल्पन्ता
मित्यात्मना मे कल्पन्ता मित्येवैतदाह ॥ ७ ॥

द्वादशसु कल्पयति। द्वादश मासाः संव्वत्सरः
संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा ताव-
तैवैन मेतदन्नेन प्रीणात्यथो तावतैवैन मेतदन्ने-
नाभिषिञ्चति चतुर्द्दशसु कल्पयत्यष्टासु कल्पयति
दशसु कल्पयति त्रयोदशसु कल्पयति † ॥ ८ ॥

* 'मिति'—इति ख।　　† "कल्पयति"—इति ख।

अथार्द्धेन्द्राणि जुहोति । सर्व्वं मेतद्यदर्द्धेन्द्राणि सर्व्वेणैवैन मेतत् प्रीणात्यथो सर्व्वेणैवैन मेतदभि-षिञ्चति * ॥ ९ ॥

अथ ग्रहान् जुहोति । यज्ञो वै ग्रहा यज्ञे-नैवैन मेतदन्नेन प्रीणात्यथो यज्ञेनैवैन मेतदन्नेनाभि-षिञ्चति † ॥ १० ॥ ४ ॥

॥ इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् [३. २.] ॥

प्रकृतत्वादेदच्छब्देन परामृशति ,— “धारां गृह्णन् । गृह्णी-तया च तया एन मप्रीणन् । तत ‘एतस्मै वसवे एतां धारां प्रागृह्णन्’ इति यत् ‘तस्मादेनां वसोर्द्धारेत्याचक्षते’ ब्रह्म-वादिन इति शेषः । अतो यजमानोऽपि अनेन होमेन तथैव करोति ॥ १ ॥

अथ पुनस्ता मेव ‘वसोर्द्धारां’ संस्कृतस्याग्ने अभिषेकात्मना प्रशंसति— “यद्वैवैता मिति । ‘सर्वं’ मित्येतस्यैव विवरणं

---

* ‘मेतदभिषिषति’- इति ख ।

† ‘मेतदन्नेनाभिषिषति’—इति ख ।

'कृत्स्न' मिति 'एतैः कामै' रिति "वाजश्च मे प्रसवश्च मे"* इत्यादि मन्त्रोक्ता वाजादयः काम्यमानत्वात् 'काम'-शब्देनोच्यन्ते। 'तैश्च एतया 'वसोर्धारया' च 'अभ्यषिञ्चत्'। अतएवोपरिष्टान् मन्त्रान् व्याचक्ष † माणोऽमु मेवार्थं अनेन चाभिषिञ्चाम्यनेन चेत्येतदिति। अत इदानीन्तनोऽपि यजमान 'स्तथैव' कृतवान् भवति। विहिता 'वसोर्धारा आज्येन पञ्चगृहीतेन औदुम्बर्या स्रुचा' कर्त्तव्या। तस्याज्यादिकस्य सर्वस्यापि ब्राह्मणं प्रागुक्त मित्याह,— "आज्येनेति॥ २॥

अथैतस्या वैश्वानरहोमानन्तर्यं प्रशंसति— "वैश्वानरं हुत्वेति। 'शीर्ष्णं' इति तृतीयार्थे पञ्चमी इत्युक्तम्। ( गलादुपरितनस्य सप्त सर्वस्यापि शिरस्त्वात् मुखेनादत्तेऽपि शिरसैव 'अन्न मद्यते' किन्तु लोके 'अभिषिच्य मानः' पुरुषा शिरस आरभ्यैताभिषिच्यते। अतोऽस्य वैश्वानरस्य शिरस्त्वादन्नाभिषेकात्मिकाया वसोर्धाराया होमस्तदनन्तर मेव युज्यत इत्यर्थः।

मारुतहोमानन्तर्यमप्युक्त प्रकारेणैव प्रशंसति— "मारुतान् हुत्वेति। 'प्राणैरु वा अन्न मद्यत' इति। 'अन्न' मिति शब्दादीन्द्रियार्थात्मकं भोग्यवस्तूच्यते॥ ३॥

वसोर्धारां जुहोतीति स्थाने विशेषानुपादानेन विधानादग्नौ

---

* वा० सं० १८. १।

† "व्याचष्टे मानो"—इति ज।

यत्र कुत्रापि होमप्रसक्तावाह ,— "तद्वा इति। तत्र वसोर्धारा विषये होमो 'ऽरण्येऽनूच्ये' पुरोडाशे कर्त्तव्य इत्यर्थः।

अत्र कात्यायनः ,— "वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतं सन्ततं यजमानोऽरण्येऽनूच्येऽग्निनाम" * इति। अथ तदेव 'वसोर्धारां'-पदं प्रकारान्तरेण निर्वक्ति,— "तदेतत् सर्वं मिति ) †। यत एते 'सर्वे' वाजादय काम्यमानत्वात् 'कामाः' अतः काम्यमानस्यैव वसुत्त्वात् 'तदेतत् सर्वं' वाजादिकं 'वसु'-शब्देनोच्यते। तस्मात् तत् प्रतिपादकमन्त्रसाध्यैषा 'धाराः' 'वसु' भवति, किञ्च 'ये' 'माज्याहुति र्हूयते' 'एषा' लोके 'यथा क्षीरस्य वा सर्पिषो वा' धारा क्रियते एव 'मारभ्या एव' मुपक्रम्य सम्पाद्यते। इदानीं क्रियमाणे य 'माज्याहुतिः' क्षीराज्यधारावत् सम्पाद्यते इति धाराकारता प्रदर्श्यते। तथा चोक्तप्रकारेण 'एषा वसुमयी धारा' भवति। यत एवं 'तस्मादेनां वसोर्धारेत्याचक्षते ॥ ४ ॥

( अथ प्रकृतहोमसाधनानां मन्त्राणां तात्पर्यार्थं दर्शयति ,— "स आहेति। 'इदं च म ऽइदं च म ऽइति' "वाजश्च मे प्रवश्च म ‡" ऽइत्यादि) § मन्त्राणां निर्देशः। 'अनेन' अनेन चानेन

---

* का० श्रौ० सू० १८. ५. १।

† बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र।

‡ 'वा० सं० १८. २।

§ बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तके।

षेत्यत्र वाजादयो निर्दिश्यन्ते। हे अग्ने त्वां 'अनेन चानेन' चाभिषिञ्चामि किञ्च 'इदं च मे देहि' अयं मर्थो मन्त्रे विवक्षित इत्युक्तं भवति ॥ ५ ॥

अथ कथ मेषोऽर्थो मन्त्रे विवक्षित इत्यत आह— "एतद्वा इति। "एतया वसोर्द्धारयेति। 'वसोर्द्धारा' नाम "वाजश्च म" इत्यादि मन्त्रैः क्रियमाणा आज्यधारा। अतश्च वसोर्द्धारयेत्येतदेव विविच्य दर्शितं,— "एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्येति। अथ प्रीणनाभिषेकानन्तरं एत मग्नि मेतान् वाजादीन् कामानवाप्नुवन्नतः कृतयागोऽग्निः 'प्रीतो' भूत्वात् तेभ्य 'एतान् प्रायच्छत्'। अत स्तथैव यजमानोऽपि कुरुते। अत एतदनुसारेण मन्त्राणा मुक्त विध एवार्थो विवक्षित इति भावः। मन्त्रेषु प्रत्येकं पर्यवसाने व्यवच्छेदः स्यादिति। तदभावाय द्वौ द्वौ मन्त्रौ संयुज्यादित्याह— "द्वौ द्वाविति। अग्नेति 'व्योकसौ' विभिन्नदेशस्थावाचर्यौ 'यथा संयुज्यात् एव' मेतदिति संयोजनं भवति। मन्त्रेषु तत्र तत्रावसानेषु 'यज्ञेन कल्पन्ता मिति' आम्नायते। तस्येदानी मुपयोग माह— "यज्ञेन कल्पन्ता मिति ॥ ६ ॥

"एतद्वा इति। पूर्वं देवाः 'केनेमान् कामान् प्रतिग्रहीष्याम' इति परस्पर युक्ता पश्चाद् 'आत्मनैव प्रतिग्रहीष्याम' इति निर्णीय 'अब्रुवन्' देवाना मात्मा शरीर 'यज्ञः' खलु शरीरवत् सर्वं भोगसाधनत्वादतश्च यज्ञरूपेण देवाः 'कामान्' प्रत्य-

गच्छन्नित्यर्थः। तद्वत् 'एव' यजमानस्य अपि यज्ञ एव शरीरम्। एवञ्च यज्ञेन कल्पन्ता मिति' वचने 'मे' 'आत्मनैवेति' कामः 'कल्पन्ता मित्येवे' तदुक्तं भवति ॥ ७ ॥

तद्वाक्यं द्वादश मन्त्रावसाने प्रयुञ्ज्यादित्याह,— "द्वादशसु कल्पयतीति। तत्र कल्पनं कृत्स्नाग्नीप्रीति भवतीत्याह— "द्वादश मासा इति। ननु सर्वत्र द्वादशस्वेव कल्पयेदिति। नेत्याह,— "चतुर्दशसु कल्पयतीति। 'वाजश्च मे प्रसवश्चम' (ऽइत्यारभ्याष्टाभिरनुवाकैरेषा वसोर्द्धारा हूयते। तत्रैकस्मिन्ननुवाके "अग्निश्च म ऽइन्द्रश्च मे सोमश्च म ऽइन्द्रश्च मे सविता च म * ऽइत्यादि ) † मन्त्राः समाम्नाताः। तत्र 'द्वौ द्वौ संयुनक्ति' इति वचनेन द्वयोर्द्वयो रवसानविधानात् मन्त्रद्वयस्य 'इन्द्रश्च म' ऽइत्येतर्द्धं भवति। अतस्ते मन्त्रा अर्द्धेन्द्रशब्देनोच्यन्ते ॥ ८ ॥

अतश्च "अथार्द्धेन्द्राणीत्यनेन तत् मन्त्रसाध्यं होमं स्तोतु मनुवदति,— 'अर्द्धप्रोणाति'-शब्दो मन्त्रवाक्यपरः। तद्देशित्थेन द्रव्यस्य होमादुपचारेण 'अर्द्धेन्द्राणि' जुहोति' इत्युक्तम्। एव मुत्तरत्रापि। अर्द्धेन्द्र मन्त्रकरणकान् होमान् कुर्यादित्यर्थः। सर्वाधिपतित्वेन सर्वस्यैन्द्रसम्बन्धात् 'अर्द्धेन्द्राणि' अपि सर्वत्वात् तत् करण होमे कृते 'सर्वाणि नेतमग्निं' प्रीणात्यभिषिञ्चति 'चे'याह,— "सर्वमेत दिति ॥ ९ ॥

---

* वा० सं० १८. १६।

† चन्द्रनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तके ।

"अंशुश्चमे रश्मिश्च मे * ऽइत्यादयो मन्त्रा ग्रहप्रतिपादकत्वाद् 'ग्रहाः' ; तत् साध्य मपि होम मनूद्य प्रशंसति — "यज्ञो वै यज्ञा इति । यज्ञसाधनत्वाद् ग्रहाणां यज्ञत्वम् ॥ १० ॥ ४ [३, २] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥

॥ इति नवमकाण्डे द्वितीयः प्रपाठकः समाप्तः ॥

* वा० सं० १८. १९ ।

अथ

तृतीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

तृतीयाध्याये तृतीयं ब्राह्मणम्।

---

॥ हरिः ॐ ॥

अथैतान् यज्ञक्रतून् जुहोति। अग्निश्च मे घर्मश्च मऽइत्येतैरेवैन मेतद्यज्ञक्रतुभिः प्रीणात्यथो ऽएतैरेवैन मेतद्यज्ञक्रतुभिरभिषिञ्चति * ॥ १ ॥

अथायुज स्तोमान् जुहोति। एतद्वै देवाः सर्व्वान् कामानाप्त्वायुग्भि स्तोमैः स्वर्गंल्लोकमायं स्तथैवैतद्यजमानः सर्व्वान् कामानाप्त्वायुग्भि स्तोमैः स्वर्गंल्लोक मेति † ॥ २ ॥

---

* 'ऽरभिषिञ्चति'—इति ख।

† 'मेति'—इति ख।

तद्वै त्रयस्त्रिꣳशादिति * । अन्तो वै त्रयस्त्रिꣳशो ऽयुजाꣳ स्तोमाना मन्तत ऽएव तद्देवाः स्वर्गं लोक मायंस्तथैवैतद्यजमानो ऽन्तत ऽएव स्वर्गँल्लोक मेति † ॥ ३ ॥

अथ युग्मतो जुहोति । एतद्वै छन्दाꣳस्यब्रुवन्यातयामा वा ऽअयुज स्तोमा युग्मभिर्व्वयꣳ स्तोमैः स्वर्गँल्लोकमयामेति तानि युग्मभि स्तोमैः स्वर्गं लोक मायंस्तथैवैतद्यजमानो युग्मभि स्तोमैः स्वर्गं लोक मेति ॥ ४ ॥

तद्वा ऽअष्टाचत्वरिꣳशादिति ‡ । अन्तो वा ऽअष्टाचत्वारिꣳशो§ युग्मताꣳ स्तोमाना मन्तत ऽएव तच्छन्दाꣳसि स्वर्गँल्लोक मायंस्तथैवैतद्यजमानो ऽन्तत एव स्वर्गँल्लोक मेति ॥ ५ ॥

---

* 'त्रयस्त्रिꣳशादिति'—इति ख, 'त्रयस्त्रिꣳशादिति'—इति ग, घ।

† 'मेति'—इति ख ।

‡ 'ऽअष्टाचत्वारिꣳशादिति'—इति क, ख ।

§ 'ऽअष्टाचत्वारिꣳशो'—इति ग, घ।

स ऽआह । एका च मे तिस्रश्च मे चतस्रश्च मेऽष्टौ च म ऽइति यथा वृक्षꣳ रोहन्नुत्तरा मुत्तराꣳ शाखाꣳ समालम्भꣳ रोहेत्तादृक्तद्यदेव स्तोमान् जुहोत्यन्नं वै स्तोमा ऽअन्नेनैवैन मेतदभिषिञ्चति* ॥ ६ ॥

अथ व्वयाꣳसि जुहोति । पशवो वै व्वयाꣳसि पशुभिरेवैन मेतदन्नेन प्रीणात्यथो पशुभिरेवैन मेतदन्नेनाभिषिञ्चति † ॥ ७ ॥

अथ नामग्राहं जुहोति । एतद्वै देवाः सर्व्वान् कामानाप्त्वाथैत मेव प्रत्यक्ष मप्रीणंस्तथैवैतद्यजमानः सर्व्वान् कामानाप्त्वाथैत मेव प्रत्यक्षं प्रीणाति व्वाजाय स्वाहा प्रसवाय स्वाहेति नामान्यस्यैतानि नामग्राह मेवैन मेतत् प्रीणाति ‡ ॥ ८ ॥

त्रयोदशैतानि नामानि भवन्ति । त्रयोदश मासाः संव्वत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् प्रीणाति

---

* 'मेतदभिषिषति'—इति ख। † 'मेतदन्नेनाभिषिञ्चति'—इति ख।

‡ 'प्रीणाति'—इति ख, ङ।

यद्वेव नामग्राहं जुहोति * नामग्राह मेवैन मेतदभि-षिञ्चति † ॥ ९ ॥

अथाह। इयं ते राण्मित्राय यन्तासि य मन ऽऊर्ज्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्यायेत्यन्नं वा ऽऊर्ग्गन्नं वृष्टिरन्ने नैवैन मेतत् प्रीणाति ॥ ॥ १० ॥

यद्वेवाह। इयं ते राण्मित्राय यन्तासि य मन ऽऊर्ज्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याये-तीदं ते राज्य मभिषिक्तो ऽसीत्येतन् मित्रस्य त्वं यन्तासि य मन ऽऊर्ज्जे च नोऽसि वृष्ट्यै च नो ऽसि प्रजानां च न आधिपत्यासीत्युपब्रुवत ऽएवैन मेत-देतस्मै नः सर्व्वस्मा ऽअस्येतस्मै त्वा सर्व्वस्मा ऽअभ्य-षिचा महीति तस्मादु हेदं मानुषꣳ राजान मभि-षिक्त मुपब्रुवते ‡ ॥ ११ ॥

---

* 'जुहोति'—इति ख।

† 'मेतदभिषिञ्चति'—इति ख; नामग्राह मेवैन मेतदभिषिञ्चति'—( without any accentuation )—इति ग, घ।

‡ 'मुपब्रुवते:'—इति क, ख।

अथ कल्पान् जुहोति । प्राणा वै कल्पाः प्राणानेवास्मिन्नेतद्दधात्यायुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पता मित्येतानेवास्मिन्नेतत् क्लृप्तान् प्राणान् दधाति ॥ १२ ॥

द्वादश कल्पान् जुहोति । द्वादश मासाः संव्वत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतत् क्लृप्तान् प्राणान् दधाति यद्वेव कल्पान् जुहोति प्राणा वै कल्पा ऽअमृत मु वै प्राणा ऽअमृतेनैवैन मेतदभिषिञ्चति * ॥ १३ ॥

अथाह । स्तोमश्च यजुश्च ऽऋक् च साम च बृहच्च रथन्तरं चेति त्रयी ह्येषा व्विद्यान्नं वै त्रयी व्विद्यान्नेनैवैन मेतत् प्रीणात्यथो ऽअन्नेनैवैन मेतदभिषिञ्चति स्वर्द्देवा ऽअगन्मा मृता ऽअभूमेति स्वर्हि † गच्छत्यमृतो हि भवति प्रजापतेः प्रजा ऽअभूमेति प्रजापतेर्हि प्रजा भवति व्वेट् स्वाहेति

---

* 'मेतदभिषिञ्चति'—इति क, ख।

† 'अभूमेतिस्वर्हि'—इति ग, घ।

व्वषट्कारो हैष परोऽक्षं यद्वट्कारो व्वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्यो ऽन्नं प्रदीयते तदेन मेताभ्या मुभाभ्यां प्रीणाति व्वषट्कारेण च स्वाहाकारेण चाथो ऽएताभ्या मेवैन मेतदुभाभ्या मभिषिञ्चत्यथ ताᳬ स्रुच मनुप्रास्यति यदत्राज्यलिप्तं तन्नेदहिर्द्धाग्निरसदिति ॥ १४ ॥

तस्यै वा ऽएतस्यै व्वसोर्द्धारायै । द्यौरेवात्माभ्रमूधो व्विद्युत् स्तनो धारैव धारा दिवो ऽधि गामागच्छति ॥ १५ ॥

तस्यै गौरेवात्मा* । ऊध एवोध स्तन स्तनो धारैव धारा गोरधि यजमानम् ॥ १६ ॥

तस्यै यजमान एवात्मा । बाहूऊधः स्रुक्स्तनो धारैव धारा यजमानादधि देवान् देवेभ्यो ऽधि गां गोरधि यजमानं तदेतदनन्त मक्षय्यं देवाना मन्नं परिप्लवते स यो हैतदेवं व्वेदैवᳬ

* 'गौरेवात्मा' इति ख ; 'गौरेवात्मा'—इति ग, घ ।

हैवास्यैतदनन्त मक्षय्य मन्नं भवत्यथातः सम्पदेव* ॥ ॥ १७ ॥

तदाहुः। कथमस्यैषा व्वसोर्द्धारा संव्वत्सर मग्नि माप्नोति† कथꣳ संव्वत्सरेणाग्निना सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येषा व्वसोर्द्धाराथ षडथ पञ्चत्रिꣳशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संव्वत्सरस्याहानि तत् संव्वत्सरस्याहान्याप्नोत्यथ यानि षट् षड् वा ऽऋतवस्तदृतूनाꣳ रात्रीराप्नोति तदुभयानि संव्वत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिꣳशत्स त्रयोदशो मासः स ऽआत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव पञ्चत्रिꣳश मेतावान्वै संव्वत्सर एव मु हास्यैषा व्वसोर्द्धारा संव्वत्सर मग्नि माप्नोत्येवꣳ संव्वत्सरेणाग्निना सम्पद्यत ऽएतावत्य उ वै शाण्डिले ऽग्नौ मध्यतो यजुष्मत्य ऽइष्टका उपधीयन्ते ऽग्नयो हैते

---

* 'सम्पदेव'- इति ग, घ ।

† 'माप्नोति'- इति ग, घ ।

| | Rs. | As. |
|---|---|---|
| Nyāyavārtika (Text) Fasc. 1-6 @ /10/ ... ... | 3 | 2 |
| Nityacārapaddhati Fasc. 1-7 (Text) @ /10/ each ... ... | 4 | 6 |
| Nityacraāpradiph, Vol. I. Fasc. 1-8, Vol. II, Fāsc. I-3 @ /10/- ... | 6 | 14 |
| Nyāyabinduṭikā, Fasc 1 ... ... ... | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa Vol. II, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| *Nyaya* sārāh ... ... ... ... ... ... | 2 | 0 |
| Padumawati, Face. 1-5 @ 2/ ... ... ... ... | 10 | 0 |
| Prāk ta - Paingalam, Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| Prākrta Lakṣaṇam, Fasc. 1 @ 1/8/- ... ... ... | 1 | 8 |
| Parācara Smriti, Vol. I, Fasc. 1-8 ; Vol. II, Fasc. 1-6 ; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... | 12 | 8 |
| Parācara, Institutes of (English) @ 1/ ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... | 3 | 12 |
| Rasarnavam, Fasc. 1-3 ... ... ... ... ... | 3 | 12 |
| Sānkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| Samaraicca Kaha, Fasc. 1-3 @ /10/ ... ... ... | 1 | 14 |
| Shaddarsana-Samuccaya, Fasc. 1-2 @ /10/ ... ... ... | 1 | 4 |
| Six Buddhist Nyaya Tracts ... ... ... ... | 0 | 10 |
| Sraddha Kriya Kaumudi, Fasc. 1-6 ... ... ... | 3 | 12 |
| Sragdhaā Stotra (Sanskrit and Tidetan) ... ... ... | 2 | 0 |
| Sucruta Saṁhitá, (Eng.) Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Suddhi Kaumudi, Fasc. 1-4 ... ... ... ... | 2 | 8 |
| Sundaranandam Kavyam ... ... ... ... | 1 | 0 |
| Suryya Siddhanta, Fasc. I ... ... ... ... | 1 | 4 |
| Syainika Sastra ... ... ... ... ... | 1 | 0 |
| *Taittereya Saṁhitā, Fasc. 27-45 @ /10/ each ... ... | 11 | 14 |
| * Ditto Brāhman, Fasc. 6-25 @ /10/- ... ... | 12 | 8 |
| Tāṇdya Brāhmaṇ, (Text) Fasc. 6-19 @ /10/ each ... ... | 6 | 14 |
| Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ ... ... ... | 7 | 8 |
| Tattva Cintāmaṇi, Vol. I, Fasc. 1-9 : Vol. II, Fasc. 2-10, ; Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V. Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... ... | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Fasc. I, @ /10/ each ... ... | 0 | 10 |
| Ditto Prakas, Fasc. 1-3, @ /10/ each ... ... | 1 | 14 |
| Tattvārthādhigama Sutrom, Fasc. 1-3 ... ... ... | 1 | 14 |
| Tirthacintamöni, Fasc. I, @ /10/ each ... ... ... | 0 | 10 |
| Trīkāṇda-Maṇdanom, Fasc. 1-3 @ /10/ ... ... | 1 | 14 |
| Tul'si Satsai Fasc. 1-5 @ /10/ ... ... ... | 3 | 2 |
| *Upamita-bhava-prapañcha-kathā Fasc. 1-2, 5-13 @ /10/ each ... | 6 | 14 |
| Uvāsagadasão, (Text and English) Fasc. 1-6 @ 1/ ... ... | 6 | 0 |
| Vallāla Carita, Fasc. 1 ... ... ... ... | 0 | 10 |
| Varsa K yā Kaumudi, Fasc 1-6 @ /10/ ... ... ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3-6 ; Vol. II, Fasc. 1-7 , @ /10/ each | 6 | 14 |
| Vidhāno Pārigāt, Fasc 1-8 : Vol II Fasc 1 @ /10/ Vol. II. 2-4 @ 1-4 ... | 9 | 6 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Vrhat Sayambhū Purāṇa, Fasc. 1-6 ... ... ... | 3 | 12 |
| Yogasāstra, Fasc. 1-3 ... ... ... ... ... | 3 | 12 |

*Tibetan Series.*

| | Rs. | As. |
|---|---|---|
| Bauddhastotaasāngraha, Vol. I ... ... ... ... | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4, @ 1/- each ... | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. I ... ... ... | 1 | 0 |
| Pag-Sam Thi Śiñ, Fasc. 1-4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 2-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... | 14 | 0 |
| Rtogs *brjod dpag hkhari Śiñ ( Tib. & Sans.* Abadān Kalpalatā,) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... | 16 | 0 |

*Arabic and Persian Series.*

| | Rs. | As. |
|---|---|---|
| Āl-Muquaddasi (English) Vol. I, Fasc. 1-3 @ 1/ ... ... | 4 | 0 |
| Āin-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... | 33 | 2 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, Index to Vol. II, @ 2/ each ... ... ... | 36 | 0 |
| Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/8/ ... ... | 55 | 8 |
| Ditto (English) I, Fasc. 1-8 ; II, Fasc. 1-7 III, Fāsc I, @ 1/4/ | 20 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | 0 | 10 |
| Catalogue of Arabic Books and Manuscripts 1-2 ... ... | 2 | 0 |

The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

Catalogue of the Persian Books and Manuscripts in the Library of the Rs. Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... 3 0
Conquest of Syria, Fasc. 1-9 @ /10/ ... ... ... 5 10
Dictionary of Arabic Technical Terms & Appendix Fasc 1-21 @ 1/8/- ... 31 8
Fara Nama ... ... ... ... ... ... 1 0
Farhang-i-Rashidi, (Text) Fasc. 1-14 @ 1/8/ each ... ... 21 0
Fihrist-i-Tusi, or Tusy's list of Shy'ah Books Fasc. 1-4 @ 1/ each ... 4 0
History of Gujarat ... ... ... ... ... 1 0
Haft Āsmān, History of the Persian Masnawi, Fasc. 1. @ /12/ ... 0 12
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... 7 8
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /10/ each ... ... 1 14
Isābah, with Supplement, (Text) 51 Fasc. @ 1/ each ... ... 51 0
Ma'āsir-i-Rahīmī, Part I, Fasc. I ... ... ... ... 2 0
Maāsir ul-Umarā, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. I I. Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12; @ 1/- each ... ... 35 0
Marhamu'L-Ilali'L-Mu'Dila ... ... ... ... 1 0
Muntakhabu-t-Tawārikh, Fasc. 1-15 @ /10/ each ... ... 9 6
Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... ... 15 0
Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ... 11 14
Ma'āsir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ... ... 3 12
Nukhbatu-l-Fikr, Fasc. 1 ... ... ... 0 10
Nizāmī's -Khiradnāmah-i-Iskandari, Fasc. 1-2 @ /12/ each ... 1 8
Qawaninu's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut.-Col. D. C. Phillott ... 5 0
Riyāzu-s-Salātīn Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto Ditto (English) Fasc. 1-5 @ 1/ ... ... 5 0
Tadhkira-i-Khushtavísān ... ... ... ... 1 0
Tabaqāt-i-Nāsirī, (English) Fasc. 1-14 @ 1/ each ... ... 14 0
Ditto Index ... ... ... ... 1 0
Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni Fasc 1-7 @ /10/ each ... 4 6
Tārīkh-i-Fīrūshāhi, of Shams-i-Sirāj Alif, Fasc 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... 3 0
The Mabani' L Lughat: A Grammar of the Turki Language in Persian 1 8
The Persian and Turki Divans of Bayran Khan, Khan Khanan ... 1 0
Tuzuk-i-Jahāngiri (Eng.) Fasc. I @ 1/- ... ... ... 1 0
Tuzuk-i-Jahāngiri, (English) Fasc. 1 ... ... ... ... 1 0
Wis o Rāmin, (Text) Fasc. 1-5 @ /10/ each ... ... ... 3 2
Zafarnāmah, Vol. I, Fasc. 1-9 Vol. II, Fasc. 1-8 @ /10/ each ... 10 10

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches, Vols. XIX and XX @ 10/ each ... ... 20 0
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members.
   *N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Journal and Proceedings, N. S., 1905, to date, @ 1-8 per No. to members and Rs. 2/ per No. to Non-members.
5. Memoirs 1905 to date. Price varies from No. to No. Discount of 25% to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910. ... 8 0
8. Moore and Hewitson's Descriptions of New Indian Lepidopters, Parts I—III with 8 colored plates, 4to. @ 6/ each ... ... 18 0
9. Kaçmīraçabdāmrta, Pārts I and II @ 1/8 ... ... 3 0
10. Persian Translation of Hāji Bābā of Ispāhān, by Hāji Shaikh Ahmad-i-Kirmāni and edited with notes by Major D. C. Phillott. ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-35 @ 1/ each ... ... 35 0
Nepalese Buddhist Sanskrit Literature, by *Dr.* R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society," only.

BOOKS ARE SUPPLIED BY V.-P.-P.